उत्तर प्रदेश प्रशासन प्रदत्त साहाय्येन प्रकाशितम्

# नेहरूदयम्



★

प्रणेता

आचार्यः अयोध्या प्रसाद शास्त्री, एम० ए०

श्रीः

# शुद्ध पत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ११ | विशदै | विशदैः |
| २ | १५ | रोषधिभा | रोषधिभं |
| ६ | १८ | सर्ता | सतां |
| ६ | १५ | प्रतीम | प्रतीकं |
| १२ | ११ | पुपाषान | पुपोषानु |
| १४ | १५ | स्वाभावात् | स्वभावात |
| १५ | ७ | विदाम | विदाम् |
| २० | ६ | वाच्य | वीच्य |
| २० | १७ | नात्र | नाम्ना |
| २१ | १३ | इत्यं वु | इत्थं कु |
| २३ | १५ | सत्यद | सत्पदं |
| ३१ | १६ | हप्या | हत्या |
| ३४ | १४ | द्त | दृत |
| ३७ | १२ | सीज | सीज |
| ४० | १५ | नोजा | नोज्ञा |
| ५१ | १७ | यतेन | मतेन |
| ६२ | ८ | ि वशा | विवश |
| ६७ | ६ | समृध्यतां | समृद्ध |
| ७४ | २ | जर्नादनः | जनार्द |

दृष्टि दोषादवशिष्टाः सधीभिः स्वयं संशोध्याः

उत्तर प्रदेश प्रशासन प्रदत्त साहाय्येन प्रकाशितम्

# नेहरूदयम्

प्रणेता

साहित्यरत्नम्, अयोध्या प्रसाद शास्त्री, एम० ए०,

व्याकरण साहित्याचार्यः

●

प्रकाशिका

इन्दिरा देवी शर्मा एम० ए०, बी० एड०

आचार्य प्रकाशनम्

आचार्य कुटीर–[illegible]नगर

रायबरेली



थम संस्करणम्; मार्च, १९७९ई०] [मूल्यं रूप्यक पञ्चव

पण्डित प्रकाण्डानाम्, 'उत्तर प्रदेश संस्कृत वागकादमी' समादृतानाम्, कानपुरस्थ श्री बलदेव सहाय संस्कृत महाविद्यालय-प्राचार्य पद मधिष्ठित वताम् गुरुवर्याणाम् आचार्य प्रवर श्री चन्द्र शेखर शास्त्रिणाम्।

## 'शुभाशंसनम्'

आचार्य प्रवरेण श्री अयोध्या प्रसाद शास्त्रिणा विरचितं 'नेहरूदयम्' नाम काव्यं समीक्ष्य सर्वात्मना सन्तोषः समजनि ।

एषा कृतिः स्वतन्त्रता संग्रामे 'नेहरु' परिवारस्येतिहास प्रसिद्धस्य बलि दानस्य नेतृत्वस्य च संस्तुतौ विरचिता सुतरां सरलया सुबोधया प्रवाह मय्या च सुरगिरा निबद्धा युगानुरूपा सर्वथो पादेया ।

लेखकस्यायं प्रयासो नितरां प्रशंसनीयः। महमस्य सामयिकस्य पाण्डित्य पूर्णस्य च काव्यस्य प्रचुरं प्रचारं कामये।

ह० चन्द्र शेखर शास्त्री

विद्वत् सम्मतीनामन्यतमा

Tel [Res] 81913

Dr. S. S. MISRA
M.A. [Sans. Eng. Sans. Cul.]
L.L.B., Ph.D., D. Litt.
PROFESSOR & HEAD
SANSKRIT DEPART MENT
LUCKNOW UNIVERSITY

KUMARSADAN,
BABUGANJ,
LUCKNOW-22607

DATE 27-2-1979




मान्याः द्विद् वर्याः

........................................ भवद्भिः विरचितं नेहरूदयाख्यं काव्य रत्नं दृष्ट्वा महती प्रसन्नताऽनुभूयते मया।

काव्येऽस्मिन् भाषा सरला सरसा च। विषय प्रतिपादनमपि सर्वथा सामयिकं भावाभिव्यञ्जकञ्च।

भारत राष्ट्रस्य कृते नव संदेश दातृ नेहरु चरितात्मकं काव्यमेतत् संस्कृतानुरागिभिर वश्यमभिनन्दनीयं भविष्यतीति मदीयो विश्वासः।

भवदीयः

डॉ० शिवशेखर मिश्रः

श्रीः

# किञ्चित् प्रास्ताविकम्

भारतीय स्वतन्त्रता संग्रामे नेतृत्व मात्म–परित्यागं चाधिकृत्य 'नेहरु' परिवारस्य अवदानम् इतिहास प्रतीतं कथमप्य विस्मरणीयं चेति विदित मेव तद्विदाम् ।

एतदेवाभि लक्ष्य तदीय संतुतौ प्रामाणिक तथ्यानि संकलय्य संस्कृत भाषाया: प्रचुरं प्रचारं चाभि सन्धाय मया 'नेहरूदयम्' नाम इतिहास–मयं काव्यं प्राणायि ।

एतेन साधारणतया जनतासु विशेषतो नव युवकेषु चित्तानु रञ्जनेन, भारतीय स्वातन्त्र्यान्दोलने 'नेहरु' परिवारस्य नेतृत्वात्मपरित्यागयो रभिज्ञतया च सममेव संस्कृत भाषा–व्यवहारं प्रत्यभिरुचि रुदेष्यतीति बलीयान् म आत्मविश्वास: । अपि च सुतरा माशास्यते :—

"ब्राह्मी मधि जिगांसूनां, पद–वाक्य–प्रयोजनम् ।
लक्ष्याण्यत्र समालक्ष्य, सुविभाव्यं भविष्यति ॥" इति

यद्यस्य विद्वत् ममाजे समुचितं मूल्याङ्कनं भविष्यति तदात्मन: परिश्रमं सफलं मंस्ये ।

अत्र यतोयत स्तथ्यानि समाकलितानि तत्तदाभारमावहन् 'उत्तर प्रदेश-प्रशासनम्'हृदाभिनन्दामितराम्, येनास्य प्रकाशनार्थं 'सहस्र रूप्यक' मितम् अनुदानं स्वीकृत्य काव्यमिद मनुगृहीतम् ।

प्रस्तुत काव्य मभि समीक्ष्य येषां विद्वत् प्रकाण्डानां शुभाशंसनानि समधिगतानि तान् प्रति सप्रश्रयं कृतज्ञतां प्रकाशये ।

एतस्य 'मुद्रण' प्रतिलिपिं परिष्कृत्य सुपुत्री इन्दिरा देवी शर्मा 'एम.ए.,बी.एड.' ममायास मति तरामलघयदिति वत्सलेन मनसा तामाशी राशिभिरभि संवर्द्धयामितमाम् ।

शिष्य प्रवर स्त्रिपाठि श्री द्वारका प्रसाद शास्त्री, 'एम. ए.' चैतस्य प्रकाशन आवश्यक तथ्यानि समाहृत्य मे महत् साहाय्य मातनोत् तदर्थं तं शुभाशीर्भि रभियोजयामि ।

रायबरेली स्थ फीरोज गान्धि महाविद्यालये संस्कृत विभागाध्यक्षः प्रेष्ठः साहित्यनिष्णातः (डाँ०) श्री घनश्याम तिवारी सबहुमान मभिनन्द्यो येन प्रकृत कृति-प्रकाशनार्थम् अनेकशः स विशेषं प्रोत्साहितोऽस्मि ।

यै श्चान्यै रान्तैः सहृदयैश्च समये समये प्रस्तुत कृतौ स्वाभिमत प्रदानानुग्रहः कृत स्तानुदारभावान् प्रति स प्रश्रयं कृतज्ञता मावहे ।

अन्ते च 'अग्रवाल प्रिंटिङ्ग प्रेस' नामक मुद्रणालयाध्यक्षः श्रेष्ठि प्रवरः श्री धनीरामोऽग्रवालः सातिशयं धन्यवादार्हः, येन नितरां प्रकाश-नान्तर व्यापृततयापि प्रस्तुतं काव्यं विशेषावधानेन यथा समयं प्रकाशितम् ।

अत्र कृतौ यत्र क्वचित् स्खालितजातं स्यात् तदुदारैक धियः सुधियः स्वयं शोधयन्तु सानुग्रहं निर्दिशन्तु च मामिति सानुनयमभ्यर्थये ।

ग्रन्थेऽस्मिन् यत्र समयोल्लेखे विशेष निर्देशो नास्ति तत्र सर्वत्र ख्रिष्टाब्दत एव गणानानुसन्धेया ।

एतेन जनतानुरञ्जनं संभविष्यतीति सुतरामाशास्ते--

विद्वद् विधेयः,

अयोध्या प्रसाद शास्त्री

आचार्यकुटीर-सत्यनगर

रायबरेली (स्थः)



यावद् भारत वर्षं,
  ध्रियते मानोन्नतं भुवः पृष्ठे ।
तावत् स्थास्यति लोके,
  'नेहरु' चरितं जनैः श्लाघ्यम् ॥

श्री वाग्देवता दीव्यतु

# अथ नेहरूदयम्

## प्रथमः सर्गः

देवीं वाच मभिध्याय, जन-रञ्जन-काम्यया ।
इतिहास मयं काव्यं, लिख्यते नेहरूदयम् ॥१॥

सौभाग्यंभूतधात्र्या, स्त्रिभुवनतिलकं, शेवधिर्मङ्गलानां,
पुण्यं क्षेत्रंश्रुतीनां, द्युसदभिलषितं, वास हेतोः सदैव ।
लीलाधामादि पुंसः, परम शुचितमं, भुक्तिमुक्ति प्रदातृ,
ज्ञानालोकोदयाद्रि, जंगति विजयते, भारतं नाम वर्षम् ॥२॥

दधाना मन्तःस्थं, विविध वसुराशिं शिवकरं,
सुपथ्यंभोज्यान्नं, सकल रस पूर्णं सुरुचिरम् ।
त्रिलोकी विख्याता, मवनितल सारांश रचितां,
परा मम्बांवन्दे, सरस हृदयां भारत भुवम् ॥३॥

हिम वच्छुभ्र किरीटं,
भालं यस्यावभासते नित्यम् ।
सुरस धुनी परिलसितं,
हृदयं मृदुलं जगति विदितम् ॥४॥

उदरं वसु परिपूर्णं,
चरणं, वरुणालय:समाश्रयति ।
रम्यं निरतिशयं तद्,
भारतमुपमीयते केन ।। ५ युग्मम्

शिरोभिः प्रांशुभिर्व्योम, व्याप्य पादै रसातलम् ।
संख्यातीतै र्जगद्धत्ते, यथा विष्णु र्हिमालयः ।। ६

पादान् स्पृशन् यस्य सहस्रभानुः,
करैः समुद्यन्नुपयाति तेजः ।
अस्तं प्रयान्नेष तथैव भक्त्या,
कुर्वन्निहो अभ्युदयं प्रयाति ।। ७

चन्द्रो हिमानी विशदै शिरोभि,
र्धृत स्तथा शीतलतां प्रयाति ।
यथा जगत् सर्व मिदं मयूखैः,
प्रकाश्य नक्तं शिशिरी करोति ।। ८

धान्यैः फलै रोषधिभि रसाढ्यां,
निधान गर्भा मवितुं सदैव ।
दृशौ समुन्मीलय नु पुष्पवन्तौ,
धरां भुजाभ्या मुप गुह्य भाति ।।९

देवाधि वासस्य नगोत्तमस्य,
प्रालेय शीतस्य महोच्छ्रितस्य,
तस्याङ्कगो राजति देशराजः
काश्मीर नामा त्रिदिवः पृथिव्याः ।१०

यत्र स्रवन्त्यः स्फटिकाच्छमम्भः
पेयं सुषीमं मधुरं वहन्ति ।
जनस्य चेतश्च निजानुरूपं,
लोके सु युक्त्यैव प्रकाशयन्ति ।। ११

सरांसि चाब्धि प्रतिमानि यत्र,
सरोज वृन्दोल्लसितानि भान्ति ।
नदत् पतङ्गावलि सेवितानि,
गुञ्जत् सुगन्धान्धमधुव्रतानि ।। १२

हरिन्मणिश्याम तटा भिरामा,
नितान्तमम्भोनिधय स्तडागाः ।
लसन्ति यत्राप्सरसां विहाराः,
सुखावगाहा नितरामपङ्काः ।। १३

गिरेस्तटी निर्गलिताम्बुवाहाः,
समुच्छलन्तः सुमनः शिलासु ।
उद्यत् पतङ्गांशु समृद्ध रागाः,
कामप्यभिख्यां दधते प्रपाताः ॥ १४

वैदूर्यमुक्तावलि संनिकाशं,
ग्राव स्खलत् तीव्र रयं सलीलम् ।
आस्वाद्यमम्भः परितो दधन्ति,
स्रोतः सहस्राणि विभान्ति यत्र ॥ १५

विगाहमानाः सरसी स्तरीभिः
सदोत्तमस्त्रीसहिता युवानः ।
समाश्रिता विष्णु पदं विमानैः,
सुरा इवाभान्ति सहाप्सरोभिः ॥ १६

प्रफुल्ल कह्लार सुगन्धि तोयाः,
संसेव्यमानाः ससुरैं मुनीन्द्रैः ।
वाप्यो महानील सुशोभिताभि
र्विभान्ति सोपान परम्पराभिः ॥ १७

सामोद पुष्पाञ्जलिभि र्भृशानताः
सुधोपम स्वादु रसैः फलै र्वृताः ।
द्रुमा घनच्छाय निवारितातपा,
हरन्ति तापं समुपेयुषा मिह ॥ १८

त्वग्भिः फलैः कोमल पल्लवैश्च ,
निःस्यन्दिभि र्नैक मनोज्ञ गन्धैः ।
समिन्धनैर्यत्र सुजात वृक्षाः ,
परोपकार व्रत माचरन्ति ॥ १९

अहिंस्र सत्त्वोप निषेवितानि ,
पदे पदे गह्वर संकुलानि ।
स्वैरं स्रवन्निर्झर सिक्त साला ,-
न्यहो सुरम्याणि तपोवनानि ॥ २०

पुष्पैरनेकच्छविभिः सुरम्यै
रजस्र माच्छादित भूरुहाणि ।
चकोर कोक प्रमुखैः शकुन्तै
श्चकासती होत्तम काननानि ॥ २१

केदार खण्डरुह कुङ्कुम कान्ति पिङ्गा,
उद्यत् सहस्र किरणांशु समिद्ध रागाः ।
आशा लसन्ति परितः कनकावदाताः,
किंवर्ण्यतेप्रकृतिनृत्यशुभस्थलीयम् ॥ २२

नैसर्गिकीह सुषमा नुपमा समन्ता,
दालोक्यते विपिनकन्दर निर्झराणाम् ।
सान्यत्र न क्वचिदपि त्रिदशालयेऽपि,❀
आदर्श भूतइव कल्पित एषदेशः ॥ २३

वाणी सदैव कवि मानस संनिधात्री,
मन्ये पुरा भुवि विहार रसं रसन्ती ।
अत्राध्युवास सुचिरं यत आमनन्ति ।
पीठं मुनीवृत मिमं किल शारदायाः ॥ २४

कृतिनां कृतिषुन्यस्ताः शिलालेखेषु सर्वतः ।
अत एवादृता लोके राजते शारदा-लिपिः ॥ २५

मनीषिणो भामह- वामनो द्भटा,
गिरामलंकार निरूपण क्षमाः ।
रसध्वने रध्व निदर्शकः कृती,
सर्ता स आनन्द विवर्द्धनः कविः ॥ २६

---

❀[ इको ऽसवर्णे० इति प्रकृतिभावः ]

श्री कुन्तको वक्र गिरां प्रवर्तको ,
रसोल् लसद् वागवतार मम्मटः ।
अर्वीह जाता अपरे परः शता ,
जगत् समग्रं सरसं प्रचक्रिरे ।। २७ युग्मम्

इत्थं संख्यावतां मुख्या , असंख्याता द्विजातयः ।
अनेकान्वय संसृष्टा , अध्यूषु स्तामुपत्यकाम् ।। २८

कामं विद्याधराः सर्वे , 'भारती' समुपासकाः ।
पारसीकादिभाषासु , निष्णाता नीति कोविदाः ।। २९

प्रभूतार्थ यशो लिप्सु , स्तत्रैकः पण्डितान्वयः ।
अवततार सस्याढयां , परितो हरितां भुवम् ।। ३०
गीर्वाण वाण्यामपि पारसीक्यां ,
सुलब्ध वर्णः समभूत् तदग्र्यः ।
श्री 'राजकौलः' प्रथितो महौजाः ,
काश्मीर विद्वत् परिषत् सुधांशुः ।। ३१

संरूढं पतनोन्मुखं समभवत् , तत् मौगलं विस्तृतं ,
साम्राज्यं ह्यवरङ्ग जीव नृपतौ दिल्लीश्वरेऽस्तं गते ।
'फर्रुख् सीयर' नामकः पदमुपागुच्छत् तदीयं तदा ,
निस्तेजाः स यथार्थ मेव विदितो भूपेषु दिल्ली पतिः ।। ३२

काश्मीर देशभ्रमणो प्रसङ्गात्,
कदा चिदा सन्न सुधी समेतः ।
दिल्लीपति स्तेन विधे र्नियोगाद्,
विद्वत् प्रकाण्डेन समागतोऽभूत् ।। ३३

तदीय वैदुष्य भृश प्रभावितो,
महीपति र्भूषयितुं निजां सभाम् ।
कवि प्रकाण्डं बहुमान पूर्वकं,
निमन्त्रयामास महामतिः कृती ।। ३४

एवं मानपुरः सरं नृपतिना हूतः स्वयं शंयुना,
दिल्लीमध्यवसत् सुखेन वनितापत्यादिभिः संयुतः ।
साचिव्यं नृप संसदि प्रतिदिनं प्रज्ञाबला दाचरन्,
संजातो बहु संमतः क्षितिपतेः प्रीतिंपरामावहन् ।। ३५

वर्षे रसेन्दु मुनिचन्द्रमिते सुरम्ये,
खिष्टाब्दतो गणनया किल भूमि पालः ।
प्रीत्या प्रभूत वसुदां वसुधा महासीद्,
हर्म्यं च तत्र निकषा परिखाममुष्मै ।। ३६

कुल्यां किलाहु 'र्नहरेतिलोका,
स्तदन्तिकावासिजनं 'नहेरुम्' ।
इत्थं मुदाभाष्यतया 'नेहरुं',
जनाः स्म तं 'नेहरु' मामनन्ति ।। ३७

स 'राजकौलः' किल 'कौलनेहरुः',
प्रथां प्रपेदे नृपतेः सुसंमतः ।
अतः स्ववैशिष्ट्य वशादुदारधी,-
र्जन प्रतीतः प्रबभूव 'नेहरुः' ।। ३८

समन्वभूद् दारसुतादि भिश्चिरं,
नृप प्रसादाधिगतां स सम्पदम् ।
ततस्तमारभ्य तदीय वंशजा,
जगत्युपाख्यां दधतीति नेहरु ❀ ।। ३९

इत्थं तु पण्डित कुलं बहुल प्रतीतं,
श्री नेहरूपपदमापमतां समाजे ।
सुश्लाघनीय मधुनापि यशः प्रतीक,
विभ्राजते जगति बिभ्रदुपाह्वयं हि ।। ४०

इति नेहरूदये काव्ये पूर्वजोदयो नाम प्रथमः सर्गः ।।

---

❀नेहरु शब्दस्य प्रकाश इत्यव्ययीभावः

अनेहसादृष्ट जुषा बलीयसा,
वंशस्य तद् वैभवमाप संक्षयम् ।
नृपातिसृष्टा वसुधापि भूयसी,
संछिन्नभिन्ना क्वचन व्यलीयत ॥ १

महौजाः कुलधुर्यस्तु, 'लक्ष्मी नारायणः' सुधीः ।
वृत्तिं कुलोचिता मिच्छन्, कुटुम्बभरचिन्तया ॥ २

तत्र दिल्लीश्वरास्थाने नाम मात्रेण संस्तुते ।
आद्यो विध्यधिवक्ताभूत्, 'कम्पनी' शासनात्प्रति ॥ ३ युग्मम्

तदात्मजोऽभूद् विख्यातः 'श्रीगङ्गाधर नेहरुः' ।
गङ्गाधर समः सत्त्वे, शासने वरुणोपमः ॥ ४

हयेषु वस्विन्दुमिते तु हायने,
बभूवयो भारतराज्य विप्लवः ।
दिल्लयां ततः प्रागभवन् महायशाः,
स 'कोट्टपालः' प्रथितोमहीपतेः ॥ ५

असौ सु पुष्टौ वपुषा महौजा,
मुखेन चन्द्र प्रतिमः सुगौरः ।
वीरोचिता मुज्ज्वल वेषभूषां,
पाणौ महासिं सुतरामुवाह ॥ ६

पदानुरूपेण निजेन कर्मणा,
विनीतया संव्यवहार भाषया ।
नृपस्य तस्मिन् कृपया प्रभूतया,
जनैः स मेने मुगलाधिनायकः ॥ ७

'नेहरु' परिवारस्य, राज्य विप्लव हेतुकः ।
अनर्थाधिगमो भूयान्, आसीत् सन्तापकारकः ॥ ८

शासनादेश पत्राणि, ❀ अभिलेखान्तराणि च ।
विमर्देन व्यलुप्यन्त, सर्वस्वं चापि निर्गतम् ॥ ९

इत्थं विनष्टे सकलेऽर्थजाते,
निर्विद्य 'गङ्गाधर नेहरुः' स. ।
दिल्ली परित्यागिभि रन्य मर्त्यैः,
संगत्य वंश्यैः सह निर्जगाम ॥ १०

स 'आगरा' नाम चिर प्रसिद्धां,
तां राजधानीं मुगलाधिपानाम् ।
समध्यतिष्ठत् कति चिन्महेच्छः,
समाः सहस्त्रीतनयः सुखेन ॥ ११

---
❀ इकोऽ सवर्णे० इति प्रकृतिभावः

भव्यो युवा चतुस्त्रिंशद्,-हायनः परवीरहा ।
अतर्क्यंस्य विधानेन, दिष्टान्तं स उपेयिवान् ॥ १२

ज्यायाँ स्तस्यात्मजोधीमाञ्, 'श्रीवंशीधर नेहरुः ।
यवीयान् 'नन्दलाल'स्तु, तौ जातौ कुल पोषकौ ॥१३

त्रिदिवं तु समारूढे, 'श्री गङ्गाधर' नेहरौ ।
गतेषु त्रिषुमासेषु, ❀ आसीद् हर्षस्य कारणम् ॥ १४

शशि रस वसु चन्द्रैः कल्पिते रिव्रष्ट वर्षे,
ग्रह गण शुभ दृष्टे पञ्चमे मासि षष्ठ्याम् ।
सुत मणि रुदयासीद् 'नेहरु' स्त्री रवनेस्तद्,
रुचिशुचिगुण भिन्नं तत् तमो नाश मार्च्छत् ॥१५

पुपोषानदिनं वृद्धिं, स बालः प्राप्त संस्कृतिः ।
नाम्ना प्रख्याति मापन्नः, 'श्री मोतीलाल नेहरुः' ॥ १६

तस्मिन्नेव शुभे घस्रे, बङ्गेषु विधि योगतः ।
ठक्कुरोपाह्व देवेन्द्र,-नाथ स्यासीत् सुतोदयः ॥ १७

स पित्रा कृत संस्कारोऽप्रतिम प्रतिभान्वितः ।
बभूव विश्व विख्यातः, कवि वृन्द शिरोमणिः ॥ १८

---

❀ इकोऽसवर्णे० इतिप्रकृतिभावः

कुल ज्येष्ठस्तु कालेन, श्री 'वंशीधर नेहरुः' ।
गौराङ्ग शासने न्याय–विभागे वृत्ति मास्थितः ॥ १९

स्थानान्तरणमाभीक्ष्ण्यात् प्राप्य स परवानभूत् ।
आत्मवानत्युदारोऽपि स्वावशिष्ट कुलात् पृथक् ॥ २०

'श्री नन्दलालो' ऽवरजस्तु तस्य,
बभार भारं स्वकुलस्य धुर्यः ।
स 'खेतड़ी' भूमिपते र्मनीषी,
मनीषितं मन्त्रि पदं शशास ॥ २१

प्रशासतो मन्त्रि पदं लघीयो,
मनस्विन स्तस्य मनो न रेमे ।
अध्युष्य वर्षाणि दशैव धीरः,
स 'आगरा' धाम पुनः प्रपेदे ॥ २२

वगाह्य सम्यग् विधि शास्त्र मर्थतः,
प्रचक्रमे विध्यधिवक्तृता मिह ।
अस्मिन् स्वतन्त्र व्यवसाय कर्मणि,
साफल्यमप्याप मनोरथातिगम् ॥ २३

नवं संस्थापिते काम मुच्च न्यायालयेऽपि सः ।
लेभे सफलता मुच्चै, र्विद्वक शिरोमणिः ॥ २४

उच्च न्यायालयो यर्हि, 'प्रयागे' स्थापितो ह्यभूत् ।
परिवारेण तह्यैव, प्रतस्थे स ततः सुधीः ॥ २५

'प्रयागं' समुपागम्य, तत्रा वास मकल्पयत् ।
उच्च न्यायालये नित्यं, प्रसिद्धिं स परामगात् ॥ २६

क्रमेण वाग्मी विधि शास्त्र पण्डितः,
स नेहरु र्वंशधरः शुचिव्रतः ।
विलक्षण स्व प्रतिभा बलान्वितो,
बभूव धुर्यो विधि शास्त्र वादिनाम् ॥ २७

दविष्ठे भ्रातरि ज्येष्ठे, 'मोतीलालो' ऽनुजः शिशुः
ज्यायसः सोदरस्यास्य स्वाश्रये समवर्धत ॥ २८

द्वयोर ध्यनयोः प्रेमा प्रगाढः समजायत ।
बन्धु-प्रेम पितृ-प्रेम, वात्सल्यं तत्र मिश्रितम् ॥ १९

अन्त्यापत्यतया मातुः, स्वाभावात् प्राणतोऽधिकः ।
भ्रातु र्दुर्ललित श्चाभूत्, समेषां प्रिय दर्शनः ॥ ३०

कुल वृद्धतया मातुः, प्रभुता सर्वतो मुखी ।
परिवारेऽभवत् तस्याः, सम्मानः सततं महान् ॥ ३१

प्रारम्भे गृह एवासौ, मोतीलाल उदारधीः ।
अशिक्षतावधानेन, पारसीकी मथारवीम् ॥ ३२

यावन्यां पारसीक्यां च, कृत भूरि परिश्रमः ।
आसीद् विचक्षणः कामं, स बालो द्वादशाब्दिकः ॥ ३३

सम्मान पात्रं संजात, स्तदानीमपि तद्विदाम् ।
तद् वैदुष्यं समालोक्य, प्रसभं विस्मितात्मनाम् ॥ ३४

'आङ्गल ' शिक्षा ततस्तस्य, जाता कर्णपुरे पुरा ।
प्रयागे च ततः पश्चात्, केवलो त्तीर्णता प्रदा ॥ ३५

अल्पीयसि वयस्येव, संप्राप्त ज्ञान गौरवः ।
न मनागपि गाम्भीर्यं, भेजे क्रीडा परः सदा ॥ ३६

महा विद्यालये शिक्षां, गृह्ण तस्तस्य संस्पृहम् ।
पाश्चात्य वेष भूषाया मासङ्गो बलवानभूत् ॥ ३७

'बी० ए०' 'कक्षावधिं शिक्षां, प्राप्यापि स महामनाः ।
संशयानो मुधा नैव, परीक्षाया मुपा विशत् ॥ ३८

तस्य प्रादुरभूच्चिन्ता, वृत्तिं कामपि सेवितुम् ।
निश्चिकाय स यत्नेन, विधि शास्त्रेण वर्तनम् ॥ ३९

उच्च न्यायालये धीमान्, कर्तु' विध्यधिवक्तृताम् ।
विधि शास्त्र परीक्षायां, सहोत्साह मुपाविशत् ।। ४०

सर्व' प्रथम उत्तीर्णः, सुवर्ण पदकं सुधीः ।
विधि शास्त्र रुचिर्लेभे साफल्यकृतनिश्चयः ।। ११

पूर्व' कर्णपुरे 'जान,-पद' न्यायालये कृती ।
श्रमेणाभिनिविष्टेन, प्रारभताधि वक्तृताम् ।। ४२

एवं कृत धियस्तस्य, व्यद्योतिष्टाधि वक्तृता ।
तत्र वर्षत्रयं नीत्वा, प्रयागं पुनरागमत् ।। ४३

उच्च न्यायालये तत्र, विध्यधिवक्तृतामगात् ।
ज्यायानितो नन्दलालः, सहसैव दिवं गतः ।। ४४

तन्निधनात् स वंशस्तु, परा मार्तिमुपागमत् ।
कुलधुरा मथो वाह, श्री मोती लाल नेहरुः ।। ४५

असमता मचिरेण महीयसा,
मुप जगाम समव्यवसायिनाम् ।
प्रतिभया लभताथ मयान्वितः,
समधिकं धन मायति सुस्थिरम् ।। ४६

❀ इति नेहरूदयं काव्ये मोतीलालोदयो नाम द्वितीयः सर्गः ।।

संख्याते रस वेदाङ्क चन्द्रै विक्रमवत्सरे ।
सहसः कृष्ण सप्तम्यां, तिथौ तस्यात्मजोऽजनि ॥ १

खिस्ष्टाब्दतो गणनया ग्रह-भोगि-याम,-
चन्द्रै मिते सुविदिते शुभहायनेऽभूत् ।
पुण्यात्मनः किल 'नवम्बर' मासिभव्यः,
सूनुश्चतुर्दश तिथौ जनताभिवन्द्यः ॥ २

स जवाहर लाल नेहरुः,
कृतनामानुकुलं विपश्चिता ।
ववृधेऽनुदिनं यथा शशी,
गुरुणारोपित बाल संस्कृतिः ॥ ३

बिभवैः स्वार्जितै लोके, श्री मोतीलाल नेहरुः ।
कुबेर इव वित्ताढ्यो, विरराज महाद्युतिः ॥ ४

वैजयन्त प्रतीकाशं, प्रासादं सोऽन्वकल्पयत् ।
'आनन्द भवनं' नाम यथार्थं विधिशास्त्रवित् । ५

इत्थं समृद्धिशालित्वा-ल्लालने पालने तथा ।
बालस्य शिक्षणेऽप्यासी दनुरूपा व्यवस्थितिः ॥ ६

जन्माष्टमी-रामलीला,-श्रावणी होलिकादिषु ।
हिन्दु पर्वसु संहृष्टो, यथानन्द मविन्दत ॥ ७

तथा यवन मान्येषु, पर्वसु प्रीति मायया ।
जन्म दिने विशेषेण, स प्रहर्ष परोऽभवत् ।। ८ युग्मम्

गौराङ्गाः शिक्षकाः प्राय स्तस्या सन्नभिभावकाः ।
पटीयान भवत् तेषां, प्रयत्नेना चिरेण सः ।। ९

अन्ये पितृव्य-पुत्रास्तु, प्राय आसन् वयोऽधिकाः ।
इत्थं स बाल एकाकी, स्वयं क्रीडा परोऽभवत् ।। १०

स बाल आसीद् दश वार्षिको यदा,
स्वसा मुदे ह्यस्य तदा व्यजायत ।
अनेहसा था वरजा परा भवत्,
ततश्च नित्यं प्रमना व्यलोक्यत ।। ११

आसीत् तदानी 'मिंगलैण्ड' शासकः,
'श्री पञ्चमो जार्ज इति प्रथाधरः ।
वंश क्रमेणा प्रतिमः प्रतापिनां,
यशो निधिर्भरित मण्डलेश्वरः ।। १२

स्वयं सिंहासनासीनः, सम्राट्स पूर्वजा नुगः ।
आत्मनीनान्तरङ्गेण, नय-शास्त्रपटीयसा ।। १३

स्व प्रतिनिधि रूपेण, समुपाहित शक्तिना ।
'लार्ड' लक्ष्मजुषा पूर्णं, राज्यचक्रमवर्तयत् ।। १४ युग्मम्

विशाले भारते देशे, सर्वत्राधिकृता स्तदा ।
गौराङ्गा एव धुर्येषु, पदेष्वासन् नियोजिताः ॥ १५

आधुनिकायुधोपेता, संख्यातीता वरूथिनी ।
गौराङ्ग बहुला देशे, स्थाने स्थाने निवेशिता ॥ १६

आर्याणां दुरदृष्टेन, भारतीयाः कर प्रदाः ।
भू पाला नाम मात्रेण, प्रभु शक्ति विवर्जिताः ॥ १७

प्रजापीडा कराः सर्वे, कर्तव्य विमुखाः सदा ।
सुखोप भोग संसक्ता, आसन्नाज्ञा वशं वदाः ॥ १८ युग्मम्

भारतीयाः कुलोत्पन्ना, अपि कामं सुशिक्षिताः ।
भृत्या क्रीता विभागेषु, निम्न स्थानेषु योजिताः ॥ १९

गौराङ्गैः प्रभुता पन्नैः, शासकोन्माद् जृम्भितैः ।
पदे पदे क्रियन्ते स्म, निकृता भारत-प्रजाः ॥ २०

उन्मार्ग गामिनां तेषा, माचरण मनर्गलम् ।
सर्वम भवत् सह्यं, तत् प्रति कर्तु मक्षमैः ॥ २१

करै रनेकै राक्रान्ताः, प्रजाः सर्वाः प्रपीडिताः ।
उद्विग्ना न लभन्तेस्म, विवशाः क्वापि निर्वृतिम् ॥२२

रङ्गभेदोद्भवो भूयान्, भारतीयेष्वनादरः ।
सीमानमति चक्राम, गौराङ्गैरनु वर्तितः ॥ २३

'रेल' यानेषु गौराङ्गो, यां कक्षां स्मावगाहते ।
न ता मध्यासितुं शक्तो, भारतीयः कदाचन ।। २४
पृथङ् न्याय व्यवस्थासीद् 'आङ्ग्ल' द्वीप निवासिनाम् ।
सुमहत्य पराधेऽपि, न दण्डया जातुते मताः ।। २५
भारतीया युवान स्तु, व्यवहार व्यतिक्रमम् ।
सदोषं शासनं तेषां, वीक्ष्या दह्यन्त चेतासि ।। २६
तेषामपि नवोष्माण, स्तन्नीति मसहिष्णवः ।
मन्त्रयामासु रन्योन्यं, क्षिप्नव आङ्ग्लदेशजान् ।। २७
श्री जवाहर लालस्य, भ्रातरोऽपि पितृव्यजाः ।
श्रृण्वतस्तस्य बालस्य, मित्रै रेव ममन्त्रयन् ।। २८
गौराङ्गान् प्रति विद्वेष, भावना बन्धु भाविता ।
बालस्या बुद्धि गम्यत्वा ललेभे चेतसि नान्तरम् ।। २९
प्रकृत्यैव स प्रह्वोऽभूद् गौराङ्गं शिक्षकं प्रति ।
द्वादशाब्दिक इत्थं च गृहे विद्या मशिक्षत ।। ३०
तस्यासीच् शिक्षकः श्रीमान् 'एफ० टी० ब्रुक्स' महोदयः ।
स च वर्ष त्रयं यावद्, विशेषेणाध्यजीगपत् ।। ३१
नाम्ना जगति विख्याता, सुश्रीः 'बेसेण्ट'* श्रीमती ।
अत्रान्तरे 'थियोसाफी', दीक्षां प्रारम्भि कीं ददौ ।। ३२

---

*क्वचित् तीव्र प्रयत्नेन संयोगादे रगौरवम् ।।

तां प्रत्यादृतस्यापि, न तत्रासक्ति रस्य तु ।
अध्ययने 'श्री ब्रुकस' स्य, प्रभावो बलवानभूत् ॥ ३३

'रूस-जापान' यो युद्धे 'जापान' देश.वासिनाम् ।
विजयेनामितोत्साहं, प्रपेदे स कुमारकः ॥ ३४

तदा भवद् राष्ट्रिय भाव संभृतं,
मनः कुमारस्य सतोऽस्य नेहरोः ।
कथं स्वतन्त्रं प्रभवेत् तु भारतं,
धियान्वहं केवल मित्य चिन्तयत् ॥ ३५

न केवलं भारतवर्ष मेतत्
स 'एशिया' द्वीप मपि स्वतन्त्रम् ।
अनारतं 'योरप' देश वासिनां,
प्रभावतो मोचयितुं समैहत ॥ ३६

इत्थं कुमारोऽपि बभूव भावुको,
वर्षं स्पृशन् पञ्चदशं स्वजन्मतः ।
शिक्षां विशेषा मधिगन्तु मादृतः.
सं प्रस्थितोसा 'बिंगलैण्ड' नीवृतम् ॥ ३७

पूर्वं 'हरो' नामक मध्युवास,
शिक्षा निकेतं प्रथितं तदानीम् ।
वर्षद्वयेनैव परं पटीयान्,
विद्या विभेदेषु बभूव भव्यः ।। ३८

मुनि व्योमाङ्क चन्द्रैस्तु मिते ख्रिष्टाब्दके पुनः ।
'केम्ब्रिजे' ति सुबिख्यातं विद्या केन्द्र मगाहत ।। ३९

विंशति वर्ष देशीयः, स्नातकः समजायात ।
उपाधिमधिगम्यासौ, केम्ब्रिज मजहात् सुधीः ।। ४०

विधिशास्त्र मथाध्येतुं स्वेप्सितं कृत निश्चयः ।
विद्याकेन्द्रं सुविख्यातं विवेशे 'नर टेम्पिलम्' ।। ४१

ततश्च नेत्र मृगाङ्काङ्क विधुभिः रिव्रष्ट हायने ।
विधिशास्त्र परीक्षा-ब्धि,-पारं समधि जग्मिवान् ।। ४२

इत्थं स शिक्षा मवसाय्य नेहरु,
र्महो महीयान् विधिशास्त्र पण्डितः ।
विदेशतः स्वं सदनं समासदत्,
सुरेन्द्र सद्म प्रतिमं समृद्धिमत् ।। ४३

।। इति नेहरूदये काव्ये जवाहरलालोदयो नाम तृतीयः सर्गः ।।

## अथ चतुर्थः सर्गः

राजनीतौ स्वभावेन, विशेषाभिरुचिं वहन् ।
भारतीय समस्यासु, विदेशावस्थितोऽपि सः ॥ १

जागरूकः सदैवासीत्, प्रति कर्तुं समुत्सुकः ।
स्वयं मुत्साह सम्पन्नः, श्री जवाहर नेहरुः ॥ २ युग्मम्

इहार्थ लुब्धैरिंग लैण्ड वासिभिः,
प्रजामनस्ताप करं समन्ततः ।
असह्यमासीन् नितरां मनस्विनां,
प्रवर्तितं यत् प्रसभं कुशासनम् ॥ ३

ये वैदेशिक शासनं निरसितुं देशादभीक्ष्णं बलाद्,
आत्म त्याग पुरः सरं कृतधिय स्तेषामुदारात्मनाम् ।
संख्यानं ह्यति दुष्करं कतिपये श्री गोखले-नेहरु;
नौरोजी-तिलकारविन्द-विपिन प्रष्ठागणेयाःकिल ॥ ४

स्थितिस्तदानीन्तन राजनैतिकी,
समाचकर्षापि[1] उदार नेहरुम् ।
प्रदेश-काँग्रेस[2] प्रधान सत्पदं,
समध्यतिष्ठद्गतभी र्जनाग्रणी : ॥ ५

---

१ इकोऽसवर्णे० इति प्रकृतिभावः । २ 'प्रे ह्रे वा इति गुरुत्वाभावः ।

आसीदुग्रदलाग्रणीं रण रुचिः श्री बालगङ्गाधरः,
"स्वातन्त्र्यं त्वधिकार एव सहजःसिद्धःस्वयं जन्मतः।"
उच्चैर्घोषियतिस्म वीर तिलको लोकान् समुत्तेजयन्,
नीतश्छद्म परायणैःस* प्रसभं कारागृहं शासकैः ।। ६

स्वदेश वस्तु ग्रहणेन साकं,
बहिष्कृतिः सर्व विदेशजानाम् ।
बङ्गेषु चक्रे जनता तदानी,
मुच्चैः प्रतिज्ञां सकलार्थसाराम् ।। ७

प्रान्तेषु चान्येष्वपि शासनं प्रति,
आन्दोलनानीह जनाः प्रचक्रिरे ।
विषेदुरह्नाय विदेशवासिनो,
व्यधुर्मतिं ते दमनाय मानिनाम् ।। ८

अनन्तरं प्राकृतन राज्य विप्लवाद्,
एर्तार्हि सर्व प्रथमं कृतोदयम् ।
प्रशासन क्षुब्ध मतीव भारतं,
सन्नद्ध मोजायितु मास्त सर्वतः ।। ९

---

* 'प्रे ह्रे वा' इति गुरुत्वाभावः

प्रवृत्ति मेतां निशमय्य नेहरु,
जंवाहरो वीरवरस्तु योरपे ।
वसन् समेतो निज देशवासिभि-
स्तदा सुसंरब्ध मना मनागभूत् ॥ १०

कारागारावरुद्धेषु, तिलकादिषु नेतृषु ।
पीडा मुष्ण दलीयानां, चक्रु गौराङ्ग शासका :॥११

प्रभावशालिनेतृत्व, विरहादुग्र वादिनः ।
प्रायोऽवसाद मासेदुः, स्वातन्त्र्य-समुपासकाः ॥ १२

उदार वादिनः सर्वे, शासकैर्नय वेदिभिः ।
'मिण्टो मार्ले,' पथेनैव, शासनाभिमुखी कृताः ॥ १३

सदनं समुपागम्य, श्रीमाँस्तरुण नेहरुः ।
उच्च न्यायालये धीरः, प्रारेभे विधिवक्तृताम् ॥ १४

अथ प्रतिनिधि र्भूत्वा, तस्मिन्नेव तु हायने ।
स 'बाँकीपुर, 'कांग्रेस', समिति प्रमना ययौ ॥ १५

विश्वव्यापि महायुद्ध, मुपाक्रमत योरपे ।
आसीद् दूर तरेणापि, तेन भारत मन्वितम् ॥ १६

आसीत् तदानीं विहितेन यन्त्रितं,
प्रसह्य रक्षा नियमेन भारतम् ।
अमुत्र लोका गुलिकाभिराहता,
इति प्रवृत्तिः परितो व्यजृम्भत ॥ १७

सेना प्रवेशः प्रसभं जनानां,
'पञ्जाब' देशे भवतीति वार्ता ।
समन्ततोऽन्तः करणं तदानीं,
मनस्विनां क्षुब्धतरं वितेने ॥ १८

शनैः शनै भारत-राजनैतिकं,
प्रावर्तताग्रेसर मत्र जीवनम् ।
आसीद् बहिः श्री तिलकोऽपि कर्मठः,
कारागृहात् सम्प्रति मुक्तबन्धनः ॥ १९

स तदानीं 'होमरूल', समितिं समजीघटत् ।
तत् समानान्तरा मन्या, मपि 'वेसेण्ट ❀ श्रीमती ॥ २०

द्वयो रेवानयो र्लोकाः, सम्भूय समवस्थिताः ।
प्रतिरुद्ध गतिर्भूय आसीद् वेसेण्ट ❀ श्रीमती ॥ २१

❀ क्वचित् तीव्र प्रयत्नेन संयोगादेरगौरवम् ।

'वेसेण्ट श्रीमती' रोधात्, सहोत्साहं प्रभावितः ।
उदार वादिभिरन्यैश्च, समं नेतृभिरात्मवान् ॥ २२

'होमरूल' स्मृतिंमत्वा, श्री मोतीलाल नेहरुः ।
'प्रयाग' स्थित शाखायाः, सभापतिरजायत ॥ २३ युग्मम्

वर्षे रसेन्दु ग्रह चन्द्र भाविते,
बभूव 'काँग्रेस' महाधिवेशनम् ।
जवाहरो 'लक्ष्मण पत्तने' तदा,
समागतो गान्धि महोदयेन सः ॥ २४

श्रुत्वा ततो राष्ट्रिय भावपूर्ण,
सुभाषणं 'भारत-कोकिलायाः' ।
'प्रयाग राजे' नितरां बभूव,
स नेहरू राष्ट्रिय भाववादी ॥ २५

इतश्च तस्मिन् स्मरणीय हायने,
सरस्वती जन्मदिने महोदये ।
अधीत विद्यः समवाप्त कौशलो,
युवा वरेण्यो गुरुणानुमोदितः ॥ २६

गुणैरुपेतां विदुषीं मनोरमां,
कुलाभिवृध्दयै सह धर्मचारिणीम् ।
अथेन दिल्ल्यां कमलालया-समां,
निजानुरूपां 'कमला' मवाप सः ॥ २७ युग्मम्

योरपीय महायुध्दे, गते शान्तिं तु भारतम् ।
अन्तरुत्साह सम्पन्न,मासीत् क्षुब्धतरं तदा ॥ २८

'रौलट बिल' संत्रास, आसीत् सर्वत्र भारते ।
समवेत स्वेरणास्य, विरोधः सुमहानभूत् ॥ २९

नवेन्दु ग्रहचन्द्रै स्तु, मिते वर्षे महामनाः ।
महा व्याधि विनिर्मुक्तो, रोग शय्या समुत्थितः ॥ ३०

तदा तु तत् प्रतिरोधाय, सम्राट् प्रति निधिं प्रति ।
विफल प्रार्थनो गान्धि, र्जात आन्दोलना ग्रणीः ॥३१युग्मम्

रौलट बिल' भङ्गाय, सत्याग्रह सभान्तरे ।
सदस्यान् सर्व भावेन, स प्रतिज्ञा मकारयत् ॥ ३२

प्रवृत्ति मेतां निशमय्य निर्वृतः,

स नेहरुवंश मणि र्जवाहरः ।

विधातु मह्लाय महौजसोर्जित-

स्त्वियेष सत्याग्रह मन्त्र रुत्सुकः ।। ३३

सुत प्रवृत्ति परि लक्ष्य भावुकां,

निवारयिष्यन् गुरु रस्य धी धनः ।

समाजुहावाशु तमात्म सद्मनि,

निदेशकं गान्धि महोदयं तदा ।। ३४

परा ममर्शाति चिरं महात्मना,

मिथः स देशस्य परिस्थितिं प्रति ।

तच्छन्दतो गान्धि महोदय स्तदा,

निवारयामास जवाहरं ततः ।। ३५

मोतीलालोऽपि देशस्य; विषम स्थितिभावितः ।

गौराङ्ग शासनात् क्रूराद्, विमनाः समजायत ।। ३६

परिस्थितीनां परिवर्तनादसा,
वुदार भावान् जहाच्छनैः शनैः ।
चिरं स्वकर्तव्य विनिश्चयाक्षमं,
मनस्विनोऽप्यस्य बभूव मानसम् ।। ३७

'पञ्जाब' देशे 'जलियानवाला'
बीभत्स काण्डेन विभिन्न मर्मा ।
वैदेशिकं शासनमेव देशात्
क्षेप्तुं सुदूरं खलु निश्चिकाय ।। ३८

देशे तदानीं घटना अनेका,
असह्य भावा विषमा बभूवुः ।
सत्याग्रहान्दोलन कार्य मेव,
कालं कियन्तं स्थगितं यथासीत् ।। ३९

स्थानेषु 'दिल्ली' प्रमुखेषु सैनिकै,
र्जना निरीहा गुलिकाभि राहताः ।
'पञ्जाब' देशे नितरां विभीषणं,
बभूव कृत्यं मनसो विदारकम् ।। ४०

आसीत् सैनिक शासनं सुकठिनं 'पञ्जाब' देशे तथा,
सम्बन्धोऽपर देश वासभिरभूच्छिन्नो यथा सर्वथा ।
नोवार्तापि कथं चिदेव सुलभा तत्र स्थितानाँ नृणां,
ये बाह्याः प्रतिकर्तु मक्षमतया तूष्णीं बभूवुर्जनाः ॥ ४१

शनैःशनै स्तत् प्रमुखस्थलेभ्यो,
निर्वर्तितं सैनिक शासनं तत् ।
'काँग्रेस मुख्याः सममन्यलोकैः,
साहाय्य हेतोः सहसाभियेतुः ॥ ४२

पण्डित मोतीलाल स्तु, युतो गान्धि महात्मना ।
देश बन्धवादिभि र्धीरै, र्गणेयै रन्यनेतृभिः ॥ ४३

दुर्घटना समीक्षार्थम्, 'अमृतसर' मन्वगात् ।
श्री जवाहर लालोऽपि, तत्रासीत् कर्मठो महान् ॥ ४४

महामना मालवीयः, श्रद्धानन्देन स्वामिना ।
पीडितानां विशेषेण, साहायक मवर्तयत् ॥ ४५

गौराङ्गापसद स्तत्र, सेनानीं 'डॉयराभिधः' ।
हत्या काण्डाभियुक्तोऽसौ गर्ह्यतेस्म समीक्षकैः ॥ ४६

अंशेऽन्तिमे तु वर्षस्य, पुरेऽमृतसराभिधे ।
अभूदुत्साह सम्पन्नं,'काँग्रेस' स्याधिवेशनम् ।। ४७

स तत्रावर्तत श्रीमान्, मोतीलालः सभापतिः ।
राष्ट्रियान्दोलनं तस्मा, न्नवं रूप मधारयत् ।। ४८

यद्यप्युपस्थितस्तत्र तिलको लोक पूजितः ।
तथापि लोका नेतारं, श्री गान्धिमभ्यमंसत ।। ४९

निरोधात् तत्क्षणं मुक्ता, 'अली' बन्धू विशेषतः ।
संगतौ समहोत्साहं, नेत्रा गान्धि महात्मना ।। ५०

उग्रादुग्रतरं मुहुः समभवत् तद् राष्ट्रियान्दोलनं,
गौराङ्ग प्रभवोऽपि घोर दमनं, चक्रुः स्वशक्त्या तथा ।
नेतारः प्रमुखाः समेऽपि कुटिलैः,कारावरुद्धाःकृताः,
कारा कृच्छ्रमसेधतामपि पिता-पुत्रा वुभौ नेहरू ।। ५१

इत्थं गान्धि मते स्थितौ प्रमुदितौ क्लेशान् सहिष्णू भृशं,
कारा क्लेशमनेकशोऽन्वभवतां धीरावुभौ नेहरू ।
हर्म्यं सर्वं सुखावहं सुविपुलं कृत्वाञ्जसा राष्ट्र साद्
विख्यातं सुतरां 'स्वराज्य भवनं' नाम्ना स्वयं चक्रतुः।।५२

एवं भारत नेतृताम कुरुतां तौ नेहरूवाग्मिनौ,
कारामुक्ति मवाप्य देश जनतां संबोधयन्तौ पृथक्।
व्याख्यानैर धिकार बोध जनकै रोजस्विभिःसुस्तुतै-
र्बन्धं प्राप्य मुहुः सुनिश्चित धियौ कारागृहं भेजतुः ॥५३

देशव्यापि समन्ततः प्रतिदिनं भूयो जनान्दोलनं,
धम्रासन् पनशोऽप्यनेकमहिला भावावृताः कर्मठाः।
सातङ्का अभिवीक्ष्य शासन कृतोऽजायन्त वैदेशिकाः,
सन्धिं कर्तुं मतीव तेऽथ विवशाः 'कांग्रेस' नेतॄननु ॥५४

नित्यं नेतृधुरां वहन्ननु भवन् कारालये यन्त्रणां
भूयोभार भरा कुलोऽनुदिवसं स्वास्थ्य व्ययं जग्मिवान्।
वर्षेत्विन्दुगुणाङ्क चन्द्रकलिते लोकान्तरं प्रस्थितो,
मोतीलालउदारनीति कुशलःख्यातो महान्नेहरुः ॥५५

विलसत्य धुना विभूतिमद्
नितरां तस्य न भौतिकं वपुः।
शशि रश्मि समुज्ज्वलं यशः,
सततं स्थास्यति लोक वन्दितम् ॥ ५६

॥ इति नेहरूदये काव्ये भारतीयान्दोलनो दयो नाम चतुर्थः सर्गः ॥

# अथ पञ्चमः सर्गः

धीरो वीर ज़वाहरोऽपि गुरुभिः श्री गान्धि मुख्यैस्तदा,
सांख्यैः शोकतमो ऽपहैः सुवचनैस्तत्त्वं परं बोधितः।
शोकं देश निवासिभिः समजहाज् ज्ञाताखिलावस्थिति,-
र्भेजे सान्वय एव निश्चितमतिः पूर्वोपस्टष्टां धुरम् ॥ १

ध्वजं त्रिरङ्गं दधती करेण,
स्वदेश भक्ति प्रवणास्य माता।
'स्वरुप रानी' प्रथिताभिधाना,
सत्याग्रहान्दोलन मन्वतिष्ठत् ॥ २

दण्डा भिघातान्नहि वीर माता,
कारा निवासा दथवा व्यभैषीत्।
जुघोष सा भारत मातुरुच्चै,-
र्जयं जनाग्रेसरतां वहन्ती ॥ ३

सभर्तृका चास्य यवीयसी स्वसा,
स्वदेश वस्तु ग्रहणादृत व्रता।
विदेश वस्तु व्यवहार रोधकं,
मुदा जनान्दोलन मन्वचालयत् ॥ ४

कारालयावास मवाप्य नैकशः,
सुखेन 'लक्ष्मीं विजयाभिधा तदा ।
क्लेशाननेकानसहन्महाशया,
मनागपि स्वान्नियमान्न विव्यथे ॥ ५

भर्ता तदीयो रणजित् सु पण्डितः,
स्वातन्त्र्य मासादयितुं दृढव्रतः ।
मते स्थितो गान्धि महोदयस्य यः
सत्याग्रहं चालयति स्म निर्भयः ॥ ६

दण्ड प्रहारानसहन्महामना,
अवाप कारालय यन्त्रणा अपि ।
अनेकशो वीर जवाहरान्वित,-
स्तथापि लक्ष्याद् विरतो न पण्डितः ॥७

सुखोचिता सा कमलाति कोमला,
महानुभावा 'कमला' मित प्रभा ।
स्व भर्तृ सं सेवित मार्ग गामिनी,
बभूव भावेन जवाहर प्रिया ॥ ८

मृदुस्वभावाप्यसहिष्ट सा भृशं,
कठोर कारागृह यन्त्रणां मुदा ।
वपुस्तदीयं तु शिरीष कोमलं,
अहो शनैःस्वास्थ्य मशेषतो रुजा ।। ९

कृष्णाभिधानापि कनीयसीस्वसा,
सत्याग्रहान्दोलन मन्ववर्तत ।
पितृव्य जाता अपरेऽपि वंशजाः,
स्वदेश सेवा व्रत मभ्युपासत ।। १०

इत्थं वीरजवाहरोऽनुदिवसं श्री गान्धि मार्गानुगः,
श्री राजेन्द्र-पटेल-पन्त* प्रमुखैः 'कांग्रेस' वीरैर्वृतः ।
उद्धर्तुं नितरामनीति बहुलं वैदेशिकं शासनं,
सोत्साहं जन नायकः स नयते स्मान्दोलनं सान्वयः।।११

क्रूरात् क्रूरतरं नितान्त दमनंवैदेशिकैः शासकैः,
प्रक्रान्तं कुटिलै रुपाय कुशलै रासीत् तदा भारते ।
आसन् भारतवासिनोऽपि सकलाः स्वातन्त्र्य भावावृताः,
सोढुं सर्वमपि प्रसह्य मुदिताःसन्त्नु निर्देशिताः।। १२

---

* 'प्र हरे वा' इति गुरुत्वाभावः

एकीभावं समापन्नाः, सर्वँभारतवासिनः ।
'काँग्रेस'स्य ध्वजच्छाया, मासेदुः कृतनिश्चयाः ॥ १३

स्थितिमेतां समालोक्य, तदा गौराङ्ग शासकाः ।
हृदयेषु व्यकम्पन्त, कान्दिशीक दशां गताः ॥ १४

भारतनेतृभिः सन्धिं, कृत्वा हित्वा च भारतम् ।
भारतीयेषु निक्षिप्य, शासनं तु यथायथम् ॥ १५

ससम्मानमितो गन्तुं, साम्प्रतमस्ति साम्प्रतम् ।
संहता इति निश्चित्य गौराङ्गा दीर्घदर्शिनः ॥ १६ युग्मम्

सम्राट् प्रतिनिधिर्धीमाँ, 'लार्ड माऊण्ट वेटनः' ।
युक्त्या भारतनेतृभ्यः, स्वातन्त्र्यं प्रतिशुश्रुवान् ॥ १७

भेदनीति प्रयोगेण, यवनान् स व्यजीघटत् ।
तेषां प्रधान नेतासीज, 'जिन्ना', नाम्ना दुराग्रही ॥ १८

चकमे स पृथग् राज्यं, यवनानां कृते कृती ।
महात्माप्यनुमेने तद्, अनुनीयानु यायिनः ॥ १९

इत्थं भारत मातु,
दुंरदृष्टतयातु भारतीयानाम् ।
परिस्थितौ विषमायां,
जातो हन्ताङ्ग विच्छेदः ॥ २०

वर्षे हयाब्धि ग्रह चन्द्र संख्ये,
मासे त्वगस्ते विमल द्यु रम्ये ।
शुभे तिथौ पञ्च दशेऽर्ध रात्रे,
स्वतन्त्रतां भारत मा ससाद ।। २१

जिन्नाभिधेयः कृत पूर्व निश्चयः,
पूर्वेद्युरेवा लभताभि काङ्क्षितम् ।
पाकाह्वयं राज्य ममर्ष हेतुकं,
गौराङ्ग दुर्नीति विजृम्भितं खलु ।। २२

स्वतन्त्रता वाप्ति धृतात्म तोषाः,
कथं चिदेतं निज देशभङ्गम् ।
जवाहर प्रष्ठ जनाग्र गण्या,
विषेहिरे गान्धि वशंवदा हि ।। २३

मनस्विभी राष्ट्र-पितु र्मते स्थितैः,
समेत्य 'काँग्रेस' महोच्च नेतृभिः ।
जवाहरो नेहरु रेव भारते,
प्रधान नेता विधिना प्रकल्पितः ।। २४

'दिल्ली' मधिष्ठाय स 'लाल दुर्गे'
स्वतन्त्रतावाप्ति दिने त्रिरङ्गम् ।
राष्ट्र-ध्वजं ह्युच्छ्रितवान् सहर्ष,
स्वातन्त्र्य संग्राम महा प्रवीरैः ॥ २५

समन्ततो भारत मातु रुच्चै,
र्महात्मनो गान्धि महोदयस्य ।
समुच्चरन् वीर जवाहरस्य,
जयेति घोषो व्यनदद् दिगन्तान् ॥ २६

आबाल वृद्धं जनता मुदान्विताः,
प्रमोद नृत्यैः सह राष्ट्र गीतिभिः ।
अनेकधा मङ्गलवाद्य निःस्वनैः,
सम्पूर्ण देशं व्यधु रुच्छ्रितध्वजम् ॥ २७

इत्थं स्व राष्ट्रोद्धरण प्रवृत्तः,
स सान्वयो ऽभीप्सित सिद्धिमाप ।
श्री गान्धि मुख्यै र्जनता ग्रणीभि,
र्नियोजितः शासन भार माधात् ॥२८

स्वातन्त्र्य भव उल्लासो, बभूवोन्माद कारकः ।
अनुदारात्मनां नृणां, देशयोरुभयोरपि ॥ २९

बहु संख्या बलीयांस, स्त्वल्प संख्यान् सुदुर्बलान् ।
क्रूरतया स्म निघ्नन्ति, ह्यामर्षा इतरेतरम् ॥ ३०

परःसहस्राः सस्त्रीकाः, सापत्याः सपरिच्छदाः ।
हित्वा पूर्वं निजावास, मन्यत्र शरणं ययुः। ३१

बलात्कारः क्वचित् क्वापि, कन्यका हरणं तथा ।
शिशूनां हिंसनं भूयो, धन-दारादि लुण्ठनम् ॥ ३२

जनता प्रमथनं क्वापि, गृहादिष्वग्नि दीपनम् ।
क्रूरोऽतिदानवाचार, इति शुश्रुविरे कथाः ॥ ३३

नेतार स्तु जनक्षोभं, श्रुत्वा 'भारत--पाकयोः ।
संशमयितुमिच्छन्तः, परीयु र्घटनास्थलम् ॥ ३४

सान्त्वयित्वा जनानुग्रान्, प्रति बोध्य सहिष्णुताम् ।
कथं चिच्छमया मासुः, कलहं साम्परायिकम् ॥ ३५

'नोआखाली' सहक्षेषु, यत्रासीद् विषमास्थितिः ।
स्थलेषु तत्र संविग्नः, स्वयंराष्ट्र-पितायया ॥ ३५

पद गामी स सर्बत्र, बोधयन्नाततायिनः ।
लोकानुग्रतमाद् भावाद्, वारयामास सान्त्वनैः ॥ ३७

'पाक' प्रपीडिता लोका, गणशः शरणार्थिनः ।
शरण्यं समुपाजग्मु, र्भारतं सर्वतो दिशः ॥ ३८

तत् समस्या समाधानं, साधु 'नेहरुणा' कृतम् ।
यथा योग्यं यथास्थानं, सर्वे ते विनिवेशिताः ॥ ३९

अन्योन्य मित्रता भावं, भिन्न धर्मा वलम्बिषु ।
नित्यं सहिष्णुता भाव, मुदभावयदात्मवान् ॥ ४०

स भारते सुस्थिर लोकतन्त्रं,
विधातु मैच्छद् विधिनैव धीमान् ।
निर्मातु मस्मा न्नव संविधान,—
मजी धटत् सप्त सदस्य सङ्घम् ॥ ४१

आसीत् तदध्यक्ष पदेऽभिषिक्तः,
सत् कीर्ति 'रम्बेदकरः' प्रसिद्धः ।
वर्ष द्वयेनैव बभूव पूर्ण,
तद् भारतीयं नव संविधानम् ॥ ४२

॥ इति नेहरूदये काव्ये भारतीय स्वतन्त्रतोदयो नाम पञ्चमः सर्गः

## अथ षष्ठः सर्गः

वर्षे ख भूत ग्रह चन्द्र संख्ये,
ह्याद्ये शुभे मासि जवाहरेण।
प्रसिद्ध षड् विंश तिथौ स्वदेशे,
प्रवर्तितं तद् नव संविधानम् ॥ १

विधानतो भारतवर्ष मेतत्
प्रसिद्धि मागाद्'गणतन्त्र राज्यम्'।
अग्रेसरो राष्ट्र पतिर्बभूव,
सुश्रीक 'राजेन्द्र * प्रसाद' नामा ॥ २

प्रधान मन्त्री प्रथमो विधानतो,
जवाहरो वीरवरः स नेहरुः।
अभूज् जनानां हृदयाधिनायकः,
स्वभावधीरो नय वर्त्म देशिकः ॥ ३

ततस्तु सम्प्राप्तवयस्क लोक,
मताधिकारेण समस्त देशे।
निर्वाचनं तत् प्रतिबन्ध मुक्तं
तदग्र वर्षे सम कारयच्च ॥ ४

---

* 'प्रे ह्रे वा' इति गुरुत्वाभावः

निर्वाचनेन सर्वत्र, देशे 'काँग्रेस'-शासनम् ।
केन्द्रे राज्येषु सर्वेषु, लोक प्रिय मजायत ॥ ५

'सरदार पटेलेन', प्रागेव प्रति बोधिताः ।
देश हिताय भूपालाः, स्वासनानि जहुर्मुदा ॥ ६

तेषां प्रान्तेषु राज्यानि, विलीनानि यथाक्रमम् ।
अन्यानि सङ्घी भूतानि, प्रान्तरूपाण्य धारयन् ॥ ७

'जवाहर' स्तु देशस्य विकासाय दृढव्रतः ।
'भारत योजना योगं', सम कल्पय दुत्तमम् ॥ ८

तन्निदेशेन भूयिष्ठाः, पञ्चवर्षीय योजनाः ।
अत्र प्रवर्तयामास, भविष्यति सुखावहाः ॥ ९

'एशिया' ख्य महाद्वीप,- राष्ट्र सम्मेलनं व्यधात् ।
'वैदेशिका महाद्वीपं, हित्वा यान्त्वि' त्यघोषयत् ॥ १०

'कोरिया' ख्यस्य देशस्य, समस्यां स समादधौ ।
'अफ्रीका' ह्व महाद्वीप,- देश-स्वातन्त्र्य मुज्जगौ ॥ ११

विदेशेषु तु सर्वत्र, ताटस्थ्यं चाप्यशिश्रियत् ।
आसीत् तटस्थतानीतिः, सफला थ शिव प्रदा ॥ १२

समाजवाद-सल्लक्ष्यम्, 'अवा डि' अधिवेशने' ।
घोषयित्वा शनैस्तस्य, प्राप्त्यर्थं यत्न माचरत् ।। १३

'गो आ' राज्य समस्यायाः, नेहरु बुद्धिमत्तरः ।
शुभोदर्कं समाधानं, चक्रे सर्वत्र वन्दितम् ।। १४

यत्नात् समूल मुत् खाता, भू-स्वामित्व परम्परा ।
जवाहरेण वीरेण, कृषकाणाँ हितैषिणा ।। १५

प्रचुरान्न समुत्पत्तिं, वाञ्छन् देशे महामनाः ।
'उर्वरक' प्रक्लृप्त्यर्थं, प्रतिष्ठानान्यसाधयत् ।। १६

सेचनार्थं यथा कालं, 'नल-कूप' नियोजनम् ।
भूयः प्रसार यामास, कुल्यानां स परम्पराः ।। १७

विद्युदुत्पादनार्थं च, प्रभूता बन्धयोजनाः ।
अत्र प्रवर्तयामास, दूर दर्शी जवाहरः ।। १८

कृषि योग्यान्यनेकानि, यन्त्राण्याधुनिकानि च ।
तथैवोत्तम बीजानि, समाहारयदात्मवान् ।। १९

कृषीवलाभि वृद्ध्यर्थं, यच्चान्यत् समपेक्षितम् ।
तत् सर्वं कल्पयामास, महेच्छः स जवाहरः ।। २०

अथ शिक्षा प्रसाराय, महान्तं यत्न मास्थितः ।
प्रौढशालास्तथा रात्रि, शाला ग्रामेष्व तिष्ठिपत् ॥ २१

समाजेपृष्ठ गानां तु, दुर्बलानां स्वभावतः ।
'हरिजन' प्रतीतानां, विशेषेण महाशयः ॥ २२

अभ्युत्थानाय लोकानां, संस्थासु विविधासु च ।
निःशुल्क शिक्षणं शश्वच्, छात्रवृत्या सहाकरोत् ॥ २३

राष्ट्रनिर्मातृ-रूपेण, शिक्षकाणां समादरम् ।
लोक कारयितुं लोकै, रसौ प्रायसदन्वहम् ॥ २४

शश्वल्लोकोपकारीणि,, कुर्वन् कर्माण्यतन्द्रितः ।
सुश्लोक्यः सुस्थिरः श्रीमान्, न मनाग प्यखिद्यत ॥ २५

इत्थं भूयांसि कार्याणि, लोक कल्याण काम्यया ।
अकरोद् देशे विदेशेषु, श्रीमान् पण्डित नेहरुः ॥ २६

स्वातन्त्र्य लाभाद् देशे तु, स्वाच्छन्द्यं बह्ववर्धत ।
भ्रष्टाचारस्तदायत्तः, पप्रथे सर्वतो मुखः ॥ २७

तन्निरोधाय संरब्धो, महान्तं यत्नमास्थितः ।
दण्ड्यान दण्डयल्लोकान्, केन्द्रीय सचिवानपि ॥ २८

सर्वतः सर्वथाभीष्टां, धीमाँ ल्लोक हितेच्छया ।
देशे प्रवर्तयामास, 'कामराज'स्य योजनाम् ॥ २९

जनता पणनार्थं तु, सौकर्याय समादृता ।
दशमांश प्रणालीयं, संस्मर्तव्या भविष्यति ॥ ३०

सेनाग्रणी'रयूबस्तु', 'पाक' शासन सूत्र धृत् ।
दुर्मना बल दर्पेण, ह्यत्याचक्राम भारतम् ॥ ३१

संघटय्य यथायोगं, विभिन्न नय वर्त्मगान् ।
विविध धर्म संस्काराँ, ल्लोकान् नैक मतानुगान् ॥ ३२

महौजाः प्रतिभाशाली, धीरो वीर जवाहरः ।
अमृष्यमाणो दुर्धर्षः स्वदेशातिक्रमणं हि तत् ॥ ३३

धृत्या नीत्या तथा शक्त्या, न्यवारयदुदायुधान् ।
दुर्हृदः 'पाक' देशीयान्, स्वदेशादाततायिनः ।३४ विशेषकम्

विद्राविता विदेशीयाः, सीमान मभि पेदिरे ।
अवस्थितास्तु तत्रैव, पुनराक्रमणैषिणः ॥ ३५

एतदालक्ष्य दुर्दान्तो, नेहरु र्नय कोविदः ।
आधुनिकायुधोपेतै, र्योद्धृभी रण पण्डितैः ॥ ३६

कर्तुं सुरक्षिताः सीमाः, स्वकीयाः कृतिनां वरः ।
विदेशेभ्यः समाहर्तुम् आग्नेयास्त्राण्यथैहत ॥ ३७ युग्मम्

अथास्य मत माज्ञाय, सर्वे देश निवासिनः ।
क्रेतु मस्त्राणि हेमानि,* उपाजह्रुः समन्ततः ॥ ३८

दान शौण्डा धनाधीशाः, केचित् काञ्चन राशिभिः ।
सहोल्लासा अनेकत्र, 'नेहरु' मुदतूतुलन् ॥ ३९

ततस्तु प्रमना स्तेन, स कार्तस्वर राशिना ।
आनाय्या धुनिकास्त्राणि, सीमाः सुरक्षिता व्यधात् ॥ ४०

निर्भीकः प्रतिभान्वितः सुचरितः सुस्पष्ट वाग्युत्थित,
स्तेजस्वी नय कोविदः कृतमती राष्ट्रैकवीरः कृती ।
विख्यातो जगती तले गुण निधिः शान्ति प्रियः शासकः,
श्रीमान् वीर जवाहरः समभवद् विश्वाभिवन्द्यः सुधीः ॥४१

सोऽयं मानव मात्र वन्धु रसमः, श्री गान्धि वादा दृतो,
वात्सल्यं शिशुमण्डले समदधात्, ख्यात 'श्चचा नेहरुः'।
कर्तव्या भिमुखः सुखेष्व निरतः, शश्वत् प्रजावेक्षको,
नित्यं च प्रिय दर्शनः पृथु यशा आसी दुदाराशयः॥४२

*इको ऽसवर्णे० इति प्रकृतिभावः

स पञ्च शीलं समता प्रयोजकं,
समस्त भू-राष्ट्र-हितावहं ध्रुवम् ।
मतं निजोपज्ञ मचारयत् सुधीः
समाहृतं नैक सुराष्ट्र शासकैः ॥ ४३

द्रुतं विकासा भ्युदितं निरीक्षितुं,
समन्ततो भारत मात्मनिर्भरम् ।
समाजवादं जनता हितेच्छया,
स भारते स्थापयितुं समैहत ॥ ४४

कृत सुश्लिष्टसन्धान, श्चीन देशाधिनायकः ।
'माओ' नाम्ना कुविख्यातो, धूर्तो विश्वासघातकः ॥४५

अत्याक्रामत् स सीमानं, महता बल भरेण हि ।
तत्रैव तमवारौत्सीद, भ्यमित्यो जवाहरः ॥ ४६युग्मम्

स 'चीन' देशस्य जनाधि नायक,—
विश्वास घाताद् व्यथितोऽन्तरात्मनि ।
विधे विधानेन रुजाऽर्चिकित्स्यया,
गृहीत वर्ष्मा क्रमशःक्षयं ययौ ॥ ४७

वर्षे वेद रसाङ्क चन्द्र कलिते मासे 'मई' नामके,
मुन्यक्षि प्रमिते तिथौ विधिवशाच्छोकाकुलं भारतम् ।
हित्वा स्वर्ग मुपारुरोह सहसा श्रीपण्डितो नेहरु—
स्तत् कीर्ति व्रतति स्तदुत्तम गुणैरद्यापि न म्लायति ।।४८

पूर्वं स्वयं बिरचिता नहि सूचिकासीद्
अद्याणुशक्ति-जल यान-विमान स्टष्ट्या ।
चित्रीयते जगदिदं सकलं स्वदेश—
स्तन्नेहरोः सुचरितं सतताभिनन्द्यम् ।। ४६

यावद् भारतवर्षं,
ध्रियते मानोन्नतं भुवः पृष्ठे ।
तावत् स्थास्यति लोके,
नेहरु चरितं जनैः श्लाघ्यम् ।। ५०

।। इति नेहरूदये काव्ये भारतगणराज्योदयो नाम षष्ठः सर्गः ।।

## अथ सप्तमः सर्गः

वर्षे हयेन्दु ग्रह चन्द्र संमिते,
'नवम्बरे' मासि शुभ ग्रहेक्षिते ।
एकोनविंशे दिवसे जवा हरो,
लेभे सुतां 'नेहरु' वंश नन्दिनीम् ।। १

तामिन्दिरेति प्रिय दर्शिनीति,
नाम्ना तनूजां पितरौ व्यधत्ताम् ।
लोकेष्वथो बन्धु जनेषु बाला,
तथैव सा ख्याति मुपाजगाम ।। २

सा'नेहरु' क्षीर निधेः समुद्गता,
सुवर्ण कान्तिः कमलात्म संभवा ।
विरोचयन्ती भवनं स्वरोचिषा,
दिने दिने चन्द्रकलेव दिद्युते ।। ३

धात्री जनोत्सङ्ग रुचिं विहाय सा,
स्व मातु रभ्यङ्क मुपेयुषी बभौ ।
परिस्फुरद्देह रुचिःशुचिस्मिता,
तडिल्लतेवेह हिमांशु संगता ।। ४

महार्ह दीप्रोपल बद्ध भूमिषु,
क्वचिल् लुठन्ती परि सर्पण क्रमे ।
क्रमेण जानु प्रचला ह्युदित्वरी,
स्वयं पदोत्थान मशिक्षतासकौ ॥ ५

पितामही मात्रुपमातृ भाषितं,
शनैरुवाचाथ कल प्रलापिनी ।
सुधोपमं तन्निशमय्य सस्पृहं,
मुदा* मविन्दन्त पितामहादयः ॥ ६

सा बालकेली र्विविधा रसन्ती,
हर्म्येषु सद्मोप वनेषु बाला ।
प्रधावनाभ्यास मसेवतारं,
चित्राम्बरा कन्दुक लीलयालम् ॥ ७

निरन्तरं सस्मितमञ्जु भाषिणी,
समं वयस्याभिरियं सुमध्यमा ।
सुधांशु लेखोडुभि रन्विता यथा,
सं क्रीडमाना नितरां व्यरोचत ॥ ८

---

*आपं चैव हलन्तानाम्० इति भागुरि यतेन टाप

सानन्द मानन्द गृहे सुलक्षणा,
समं कुलाशाभिरियं समुत्थिता ।
शिक्षार्थमायोजन मायतिक्षमं,
वयोऽनुरूपं सुतरा मसेवत ।। ९

अभूज्जनान्दोलन मत्र सर्वतः,
क्रमेण 'गौराङ्ग' कुशासनं प्रति ।
मनस्विनोऽस्यास्तु पितामहादयः,
प्रचक्रिरे भारत लोक–नेतृताम् ।। १०

पितामहोऽस्यास्तु पितापि कर्हिचित्,
कदापि माता तु पितृष्वसा क्वचित् ।
अनुक्रमेणाथ सहैव वा क्वचित्,
प्रपेदिरे निग्रह घोर यन्त्रणाम् ।। ११

प्रायो गुरूणा मतिमात्र यन्त्रणाद्,
नावाप वात्सल्य रसं निरन्तरम् ।
मनस्विनी निग्रह कर्मणा तु सा,
बभूव तेना तितराम मर्षिणी ।। १२

शिक्षा क्रमोऽस्या विधिवद् व्यवस्थितः,
कथं चिदग्रे सरतामुपेयिवान् ।
स्वदेश सेवाव्रत भावनात्मकः
स्वयं ह्युदीत स्तु गुणःकुलोचितः ॥१३

षड्वर्ष कल्पा पद-यान गामिनी,
'नैनी' स्थ कारालय वन्दिनः पितुः ।
ज्ञातुं प्रवृत्तिं प्रियदर्शिनी ययौ,
मात्रे तथा ख्यातवती दिने दिने ॥ १४

स्वयं प्रवृत्ता किल कुष्ट रोगिणा,
मसेवतेयं शिविरं मनस्विनी ।
तथा विधानेक जनोप कारकं,
समाज मत्यन्त मुदार दर्शना ॥ १५

शिक्षा प्रसङ्गेन तु 'पुण्य पत्तने',
कालं कियन्तं ह्युषिता सगौरवम् ।
ममार्ज भूयो विशिखा मलीमसा,
महानुभावा जनतोप सेविनी ॥ १६

यश्'चक्र सङ्घ'स्तु महात्म गान्धिना,
　　प्रवर्तितः सूत्र गुणोपलब्धये ।
तद् बालशाखां समचालयत् सुधी,
　　वर्षं स्पृशन्ती वपुषा त्रयोदशम् ॥ १७

आसीदसौ सुप्रथिता सदोत्थिता,
　　पटीयसी संघटनाख्य कर्मणि ।
तथाहि देशे विदितां तु 'वानरीं'
　　सेनां 'प्रयागे' समजीघटत् स्वयम् ॥ १८

ये राष्ट्रियान्दोलन योग भागिनः,
　　स्वयं क्रिया गान्धि मता नुयायिनः ।
सदैव तेषामकरोद् यथोचितं,
　　साहाय्यमन्तमुंदिता महोदया ॥ १९

अनन्तरं 'शान्ति निकेतने' ययौ,
　　कवीन्द्र 'टैगोर' रवीन्द्र संनिधिम् ।
गुरूपदेशात् समवाप सा भृशं,
　　तदा मनः शान्ति मथात्म गौरवम् ॥ २०

अत्रान्तरे वन्दिगृहे रुजार्दिता,
माता तदीया नितरा मवर्तत ।
स्थातुं न तत्र प्रबभूव सा चिरं,
प्रत्यागता मातृ–दिदृक्षया द्रुतम् ।। २१

प्रस्थापयँस्तां प्रिय दर्शिनीमसौ,
रवीन्द्रनाथो गुरुदेव ऊचिवान् ।।
अभूद मूल्यो निधि रिन्दिरात्मक'
इहे ति संसूचयति स्म नेहरुम् ।। २२

सा राष्ट्रियान्दोलन तत्परा सती,
संधुक्षयन्ती युवकेषु साहसम् ।
कृच्छ्रं तु मासान् प्रमना स्त्रयोदश,
कारालया वास मसेवतेन्दिरा ।। २३

स्वतः प्रवृत्या थ पितुः प्रभावतः,
सा राजनीतौ नितरा मसज्जत ।
अनेकधा राष्ट्रिय कर्म तत्परा,
स्वतन्त्रतान्दोलन मप्य चालयत् ।। २४

सुशिक्षिताप्यत्र विशेष दक्षतां,
विदेश मासादयितुं जगाम सा ।
उपात्त विद्या तत आगता पुनः,
स्वदेश सेवाव्रत माददे मुदा ॥ २५

पितुर्मतेनाथ वयोनुरूपे,
रूपेण शीलेन गुणोदयेन ।
श्रुतेन वित्तेन कुलेन तुल्ये,
'फीरोज' गान्धौ पति बुद्धिमाधात् ॥ २६

वर्षेऽक्षिवेद ग्रह चन्द्र संमिते,
मासे माधौ मन्मथ बन्धु सुन्दरे ।
श्रीराम चन्द्रोदय पावने तिथौ,
बभूव पाणिग्रहणं यथाविधि ॥ २७

असौ तु पाणि ग्रहणादनन्तरं,
पूर्वाधिकं राष्ट्रिय कार्य तत्परा ।
बभूव 'कांग्रेस' प्रबन्ध कारिणी-
सदस्य मुख्या जनतोप सेविनी ॥ २८

वर्षे नवेषु ग्रहचन्द्र संख्ये,
संख्यात 'काँग्रेस' महासभायाः ।
न भारते किन्तु समस्त लोके,
व्यरोचताव्यक्त पदाधिरूढा ॥ २९

'फ़ीरोज गान्धि' स्तु महात्म गान्धिना,
प्रवर्तितान्दोलन चालकः किल ।
उदार चेता जनताधिनायकः,
स राजनीत्यां परिनिष्ठितो ऽभवत् ।। ३०

अथेन्दिरा लोक सभा सदस्यता,
मुपागता मन्त्रि पदे सुशोभिता ।
महत्त्व पूर्णं सुतरां मनस्विनी,
पूर्णानि कार्याण्यखिलानि सा करोत् ॥ ३१

देशे विदेशेषु च राजनैतिके,
सम्मेलने योग मुपागता समम् ।
निजेन पित्रा प्रसभं पटीयसी,
सा राजनीतौ नितरामवर्तत ॥ ३२

वर्षे रसर्तु ग्रहचन्द्र संमिते,
शुभ ग्रहा भीक्षित मासि चादिमे ।
पुण्ये चतुर्विंश तिथौ विधानतः
प्रधान मन्त्रित्व मवाप सेन्दिरा ।। ३३

युद्धोत्तरं भारत पाकयोर्भृशं,
विसंष्ठुलासीत् तु तदार्थिकी स्थितिः ।
परिस्थितौ तादृशि देश शासनं,
बभार धृत्या प्रतिभान्वितेन्दिरा ।। ३४

जनेषु सर्वेषु नवीन चेतनां,
तथा नवोत्साह मचारयद् भृशम् ।
सा लोक तन्त्रं शिथिली भवत् पुन–
र्निज प्रभावान्वितरा मदद्रढत् ।। ३५

कांग्रेस' सिद्धान्त मतानुयायिनी,
सा तद् विरोधं नहि चक्षमे क्वचित् ।
अतोऽर्थ मन्त्री सहसा बहिष्कृतः,
'कांग्रेस' सिद्धान्त विरुद्ध माचरन् ।।३६

ये 'सिण्डिकेटीय' पदाभिमानिनः,
'काँग्रेस' संघेऽव्यवहेलनां व्यधुः ।
नेतॄन् बहिस्तान करोद शङ्किता,
संघादसौ गान्धि मतानुयायिनी ॥ ३७

'देशाज् जना! निर्धनतां निरस्यत',
घोषानुरूपं पदमप्युपादधे ।
तथाहि देशे परितः प्रवर्तिता,
अनेकधोद्योग परम्परास्तया ॥ ३८

स्वनीति लोक प्रियतां परीक्षितुं,
ह्यकारि मध्यावधि लोक संसदः ।
विर्वाचनं तत्र मतैस्तु भूरिभिः
अलम्भि साफल्यमभूतपूर्वकम् ॥ ३९

यथोचितं भारत सद्विधानके,
प्रकल्प्य संशोधन मात्मवत्तया ।
सहाधिकारैः समतीत भूभुजां,
न्यरुन्ध वृत्तिं बहुवित्त हायिनीम् ॥ ४०

कृषीवलोत्थान मभीप्सुना भुवः,
प्रभुत्व मुन्मूलितपूर्व मोजसा ।
जवाहरेणा कृतसीम बन्धनं,
प्रपूर्य तत् कार्य मरोचतेन्दिरा ॥ ४१

स्वातन्त्र्य हेतोरथ बङ्ग वासिनां,
युद्धे नयाभिज्ञतया प्रदर्शिता ।
सहानुभूतिः परमार्थ शोभिनी,
जनैर्मुहुः संमुदितै रशस्यत ॥ ४२

सा बिभ्रती स्वैरमदम्य साहसं,
प्रवर्तमानेऽपि हि 'पाक' संगरे ।
ययौ स्वयं स्थित्यवलोकनेच्छया,
मुख्यासु भूयः समराग्र भूमिषु ॥ ४३

क्वचिन् नभोऽतिक्रमणं युयुत्सया,
क्वचित्तु सीमाक्रमणं दुराशया ।
अनेकशः पाक निवासिभिः कृतं,
धृत्या विषेहे सततं शम प्रिया ॥ ४४

यद्‘रूस’ देशेन सु सन्धि पूर्वकं,
सद् भावनार्थं यतते स्म नेहरुः ।
निज प्रयासात् सविशेषमिन्दिरा,
तदेव सीमां चरमामयापयत् ।। ४५

सुश्री रभीः संयमिनी महाशया,
प्रगल्भसुस्पष्ट वचा विवेकिनी ।
न विव्यथे पश्चिम देश वर्तिनी,
मतं स्वकं स्थापयितुं सतां पुरः ।। ४६

सु स्पष्ट माह स्म गभीरया गिरा,
‘पाश्चात्य देशा अपि बङ्ग सङ्गरे ।
कोटिं समां भारत पाक नीवृता,
वारोपयन्तो न यथार्थ वादिनः ।। ४७

तथ्यं समेषा मवभासते पुरो,
यत् ‘पाक’ देशो ह्यभिषेणयन् स्वयम् ।
स्वमङ्गभूतं किल बङ्ग नीवृतं,
ह्यत्यक्रमीद्‘नादिर शाह’* क्रूरताम् ।।४८

---

क्वचित् तीव्र प्रयत्नेन संयोगादेरगौरवम् ।।

पाश्चात्त्य देशाः खलु मूक दर्शका,
स्तथाप्यवर्तन्त महत्त्व काशिनः ।
न किंचिदूचुः प्रति पाकवासिनः,
समेऽपि नूनं 'गज मीलिकां' व्यधुः ।४६

अथापि 'पाकः' स्वनृ शंसतां वहन्
परः सहस्रा नधिदङ्ग वासिनः ।
जनानुपेतुं शरणं तु भारतं
चकार कामं विवशान् निजानपि ॥ ५०

तेषां तु नित्यं भरणादिक व्ययं
त्रिकोटि कल्पं सहतेऽद्य भारतम् ।
तथाप्यहो पश्चिम देश शासका,
नितान्त मूका इव जोष मासत ॥ ५१

यदा तु सेनाः खलु 'पाक' शासकैः,
सुसज्जिताः सीमसु सं निवेशिताः ।
तदापि देशाः सकलास्तु पश्चिमा,
न किं चिदूचुः प्रति तानुदायुधान् ॥५२

सीमा सुरक्षार्थ मभीति भारतं,
यदा स्वकीया ध्वजिनीर्न्ययोजयत् ।
तदा तु ते पश्चिम देशवासिनः,
समेऽपि नूनं मुखराः समासते ॥ ५३

यो राष्ट्र संघस्य जगद् हितैषिणो,
महान् महामन्त्रि पदे प्रतिष्ठितः ।
'ऊथान्त' नाम्ना प्रथितः समन्ततो,
वाचालतां स स्म निजां व्यनक्ति हि ॥५४

काश्मीर देशे प्रथमं ततः परं,
कच्छे ततः पञ्चनदादि सीमसु ।
पाकः' पुरा क्रामक एव दोष भाग्,
इति प्रजानन् गजमीलिकां व्यधात् ॥५५

सेना निवेशो न हि सीमसु क्वचिद्
सं शोभते भारत मित्युपादिशत् ।
तदुत्तरं दातु मसौ मनस्विती,
गम्भीरता पूर्व मिदं ह्य भाषत ॥ ५६

"यावद् वराकाः परिबङ्ग मागताः,
कोटि प्रमाणाः शरणार्थिनो जनाः ।
ये भार भूतास्तु वसन्ति भारते,
तेषां समस्या नहि शान्ति मृच्छति ॥ ५७

यावच्च पाकाक्रमणाद् भयं पुनः,
प्रवर्तमानं लघु नाप गच्छति ।
तावद् वयं सीमसु संनिवेशिताः,
सेनाः कथं स्वाः प्रति संहरेमहि ॥ ५८

यावच्च पाकीय जनाधिनायको,
'यह्याः' स्वयं प्रत्यह मेव वल्गते ।
'वयं विजेष्यामह इत्यनेकशो,
बलेन संमर्द्य समस्त भारतम्" ॥ ५९

तावत् सुहृत् प्रख्य विदेशिनां वचो,
विभाव्य च स्वां प्रभुताम खण्डताम् ।
सेनाः समाहृत्य कथं नु सीमतः
कुर्याम सीमा नितराम रक्षिताः ॥ ६०

क्षेत्रेषु सर्वेषु विकास काम्यया,
प्रवर्त्य सा नैकविधाः सुयोजनाः ।
गुणैकराशिः प्रिय-दीर्घ दर्शिनी,
देशं व्यधाद् भारत मात्मनिर्भरम् ।। ६१

लक्ष्मी रसौ देश कृते सरस्वती,
तथान्नपूर्णा प्रिय दर्शिनी शुभा ।
दुर्गा भवानी तु रिपोः कृते सदा,
ह्यमोघशक्ति र्जयतीह सेन्दिरा ।। ६२

अस्यां समेऽपि प्रतिबिम्बिताः पितुः
पितामहस्यापि गुणा अभीक्ष्णशः ।
शालीनता तत्र विराजते पितुः
कोपश्च पैतामहकस्तु साम्प्रतम् ।। ६३

अनीप्सितायामपि वाचि सुस्मिता,
कोप-प्रवेगं नितरां निगूहते ।
स्थाने क्वचित् सर्व जनोपसेविते,
नालक्षि तस्याः किल कोप विक्रिया ।। ६४

अयं गुणो नेतरि राजनैतिके,
महत्व पूर्णा ह्युप लब्धि रुच्यते ।
सुस्पष्ट वादित्व मदम्य साहसं,
निर्भीकता स्पाः सहजा गुणाः खलु ॥६५

नारी मनः कोमलतां मुखे स्थिता,
तथैव कृच्छेष्वति धीरतामपि ।
सु सूक्ष्म दृष्टया सह राजनैतिकीं,
कुशाग्र बुद्धिं सहजां बिभर्ति सा ॥ ६६

पुरा त्वियं भारत पाक वण्टने
महात्मनो राष्ट्र पितु र्निदेशतः ।
आरुह्य सा जीवित संशयं स्वयं,
जनान संरक्षानवति स्म निर्भया ॥ ६७

धर्मानपेक्षं सुतरां सुशासनं,
समाज मन्तः परिवेष मन्तरा ।
एषा स्वदेशे समतां दिदृक्षते,
न जाति-भेदं सहते मनस्विनी ॥ ६८

यत स्तु सा शासन सूत्र मग्रहीत्,
ततः प्रभृत्येव समस्त भारते ।
विकास कार्यक्रम उत्तरोत्तरं,
समेधमानः खलु सर्वतो मुखः ॥ ६९

'स्वच्छन्दता मा स्म कदापि भूदिह,
स्वतन्त्रता कृच्छ्रतया जनार्जिता ।
समीहते सा गुण पक्ष पातिनी,
सर्वत्र लोकेषु निजानु शासनम् ॥ ७०

समृद्धयतां भारत मुत्तरोत्तरं,
कृषीवला मोद भरं विवृण्वताम् ।
स्थितिं समां यन्तु समाज दुर्गता,
जनो नहि स्ताद् गृह भूमि वञ्चितः ॥७१

भजन्तु वृत्तिं श्रमिकाः श्रमोचितां,
कुर्वन्त उत्पादन वृद्धि मन्वहम् ।
न वस्तुनः सर्वजनो पयोगिनो,
भवत्वभावः क्वचिदापणे सतः ॥ ७२

यथाधिकारं पुरुषाः समे स्थिता,
भवन्तु कर्तव्य परा यथा यथम् ।
यथोचितं राजकरं जना निजं,
विशोधयन्तु स्वयमेव तत्पराः ॥ ७३

नयापचारो व्यवहार दुष्टता,
परस्परा स्पृश्य विभावना तथा ।
विक्रय्य संगोपन तस्करापणौ,
समाज दोषा अपयान्तु भारतात् ॥ ७४

निरन्तरं भारत मात्म निर्भरं,
प्रपद्य सद्यः पुनरात्म गौरवम् ।"
प्रतिष्ठता मेतदिति प्रवर्तितः,
कार्यक्रमो विंशति सूत्र निश्चितः॥ ७५ कुलकम

ये त्वत्र वृद्धि प्रतिरोधकाः सदा
तुच्छार्थ लाभान्धित मन्दबुद्धयः ।
संकीर्णभावाः पद लोलुपाः परं,
विरोधिनो भिन्न पथानु गामिनः ॥ ७६

प्रशासने केवल दोष दृष्टयः,
समाचरन् ये गतिरोध मन्वहम् ।
समत्सरा ये जनता–विदूषका,
गणाधिपा भारत नेतृमानिनः ॥ ७७

समापयन्तो जनतानुशासनं,
प्रदर्शयन्तः सततं स्वविक्रियाम् ।
समन्ततोऽराजकतां चिकीर्षवो,
विमार्गगा द्रोहधियः सु संहताः ॥ ७८

अनेकशस्ते प्रति बोधिता अपि,
न तत्यजु जिह्मगतिं निजां यदा ।
तदा सुरक्षा नियमेन यन्त्रिताः,
समेऽपि कारागृह एव शेरते ॥ ७९कलापकम्

अस्याः प्रधान मन्त्रित्वे, वर्षाणां दशकं गतम् ॥
संघर्षयुग मेतद्धि, स्वातन्त्र्य युग मार्थिकम् ॥ ८०

समाजे पृष्ठगानां च, दुर्बलानां विशेषतः ।
भविष्णु भ्राजमानं तद् उपलब्धि युगं नु किम् ॥ ८१

यत्रार्थिकोन्नतेर्मार्गाः, प्रशस्ता विहिताः खलु ।
तद्‌युगं भारतं राष्ट्रं, कृतज्ञमभिनन्दति ॥ ८२विशेषकम्

यथार्थ मैतिह्य युतं विशेषतो,
　　निजानुभूति प्रमितं स्वसाक्षिकम् ।
जगत्प्रतीतं जनता प्रसक्तये,
　　समासतोऽलिख्यत 'नेहरूदयम्' ॥ ८३

स्वातन्त्र्य संयुग धुरोद्‌वहन प्रसक्त,
　　उत्सिक्त गौर वपु रुद्धरणैक हेतुः ।
'मोती जवाहर' महाद्युति संप्रकाशो,
　　विभ्राजतां जगति नेहरु 'रन्वयाब्धिः ॥८४

यत्रेन्दिरा समुदिता कमलोद्‌भवा सा,
　　तातं निजं न जहती व्यकिरत् स्वदीप्तिम् ।
लोकं बिभर्ति सुतरां कमलालयेव,
　　सोऽयं चिरं जयतु नेहरु रन्वयाब्धिः ॥८५

यस्यावदानमुदितं नितरां कृतज्ञं,

राष्ट्रं चिराय नव मभ्युदितं विभाति।

पौत्र प्रपौत्र सततानुकुल क्रमेण,

भूयात् स्थिरः स भुवि नेहरुरन्वयाब्धिः ॥८६

वर्षे रसाश्वग्रह चन्द्र संमिते,

मासे तृतीये चरमे तिथौ बुधे।

वाग् देवताया अमित प्रसादतः,

काव्यं समाप्तं मम 'नेहरूदयम्' ॥ ८७

निरस्य दूरं मनसस्तमस्ततिं,

प्रकाश्य भावानखिलान् हृदिस्थितान्।

विरोचयन्ती हृदयं स्वरोचिषा,

सरस्वती नृत्यतु वाचि मे सदा ॥ ८८

पुण्ये विप्रान्वयेऽभूत्, सुचरित विभवो, 'डालचन्द्रः' सुधीन्द्रः,
संख्यावान् सुप्रयोक्ता, सुर-नर-वचसां, तस्य पुत्रःकनीयान् ।
आप्तैः प्रोक्तो विधातुं, स्वकृतिमभिनवां, युक्त योगां युगस्य,
प्राणैषीत् काव्यमेतद्, विदुर जनमुदे, 'शास्त्र्ययोध्याप्रसादः' ॥ ८६



॥ इति नेहरूदयेकाव्य इन्दिरोदयो नाम सप्तमः सर्गः ॥
॥ समाप्तं चेदं 'नेहरूदयं' काव्यम् ॥



**प्रणेता**

पुण्ये विप्रान्वयेऽभूत्, सुचरित विभवो, 'डालचन्द्रः' सुधीन्द्रः,
संख्यावान् सुप्रयोक्ता, सुर-नर-वचसां, तस्यपुत्रः कनीयान् ।
आप्तैः प्रोक्तो विधातुं, स्वकृतिमभिनवां, युक्तयोगां युगस्य,
प्राणैषीत् काव्यमेतद् विदुर जन मुदे, 'शास्त्र्ययोध्याप्रसादः'।

अथ प्रणेतृ परिचयः

अस्त्युत्तर प्रदेशेषु 'एटा' मण्डल मण्डनम् ।
'सोरों' नाम्ना सुविख्यातं, वाराहं तीर्थ मुत्तमम् ॥ १

तद् दक्षिणेन नेदीयान्, ग्रामो'होडल् पुरा'ह्वयः ।
वशिष्ठ गोत्र संभूता, ग्रामण्यस्तत्र भू-सुराः ॥ २

मिश्रोपाह्वाः सनाढ्यास्ते, चतुर्वेद विशारदाः ।
'चतुर्धर' तया लोके, 'चौधरी'ति प्रथामगुः ॥ ३

वंश क्रमेण भू भुक्त्वात् क्षात्रं तेजः किलावहन् ।
प्रायः स्वनाम सिंहान्तं, चक्रुस्ते महसोर्जितम् ॥ ४

क्षात्रेण तेजसा तेषां, व्यद्युतद् ब्रह्मवर्चसम् ।
साकं सुरगिरा विप्रा, यावनीं मध्यगोषत ॥ ५

वेष–भूषादि–संभाषा, व्यवहारासनादिकम् ।
लोकेषु शासनं तेषां, शासकानामिवा भवत् ॥ ६

ग्रामान् प्रशासतोऽनेकान्, ब्रह्मकर्म परायणाः ।
राजसत्त्वमधिष्ठाय, राजान इव रेजिरे ॥ ७

क्रमेण तस्मिन् महति द्विजान्वये,
बभूव नाम्ना प्रथितो जनार्दनः ।
स विप्र कर्म प्रसितः कुलाग्रणी,
रराज राजेव प्रजासुवत्सलः ॥ ८

सुता स्तदीया हरि बाहवो यथा,
चत्वार आसन् महिता महौजसः ।
रूपा नुरूपा इतरेतरस्य ते
चिरं व्यरोचन्त मुदा धृतायुधाः ॥ ९

तत्रा ग्रजः श्री शिवलाल नामा,
श्री विश्वनाथस्तु सुतो द्वितीयः ।
तत स्तु नारायण सिंह शर्मा,
वंशीधरोऽभूत् तनयश्चतुर्थः ॥ १०

तेषां कुल ज्येष्ठतया प्रशासक,
श्रियोल्लसञ् श्री शिवलाल आ बभौ ।
भुवं विभज्यावरजेभ्य ऊर्जितः,
समान भागां बुभुजे भुजार्जिताम् ॥ ११

स भ्रातृवत्सल उदार मना मनस्वी,
धर्मं सनातन मनारत मन्वतिष्ठत् ।
जुष्टः श्रियाऽप्रतिमया शिवयोः सुभक्त,
स्त्रीनात्मजानलभतात्म गुणानु रूपान् ॥१२

ज्येष्ठस्तु तेषामभवन्महायशा-
दामोदरोऽत्यन्त मुदार दर्शनः ।
श्री कृष्ण लालोऽ वरजो विचक्षणः,
श्री डा(ला)ल चन्द्रः सुकृती सुतोऽन्तिमः ।१३

श्री डा(ला)ल चन्द्रः सरलः स्वभावतः,
स पारसीक्या मगम न्नदीष्णताम् ।
सदैव विप्रोचित माचरन् सुधीः,
स्व भ्रातृ दत्तां भुवमन्वपालयत् ॥ १४

सुतौ सुतां सूतवतीं निज प्रियां,
दिवं गतां वीक्ष्य सुतान्ववेक्षया ।
स 'मोहनी' ग्राम निवासि पण्डित-
प्रकाण्ड विप्रर्षि वरस्य धीमतः ॥ १५

लोकाभिवन्द्यस्य कुलाभिमानिनः,
स्वधीत विद्यस्य ऋताभि भाषिणः ।
श्री दीपचन्द्रस्य गुणै गंरीयसीं,
'रामप्रियां' नाम सुता मुपायत ।। १६युग्मम्

तस्यां सुतं 'श्री सरदार सिंहं,
लेभे ततः श्री रघुनन्दनाख्यम् ।
गोविन्दसिंहं 'हर' पूर्वं मन्य,
मन्त्यं त्वयोध्याकलित'प्रसादम्' ।। १७

महादेवीं सुता मन्त्यां ज्वालादेवींतु नामतः ।
अवापान्यान्य पत्यानि नितरां पुत्रवत्सलः ।। १८

श्री सरदार सिंह स्तु 'गोरहा' धि प्रशासितुः ।
साचिव्यं प्रज्ञयास्थाय, तद्ग्रामाँश् चिरमन्वशात् ।।१९

श्री रघुनन्दनः प्राज्ञः, 'कर्णपुर' निवासिनः ।
श्रेष्ठिनो रामचन्द्रस्य, मुख्यामात्यपदं दधौ ।। २०

हर गोविन्द सिंहश्च, मातापित्रोरवेक्षया ।
उपगेहं वसँस्तत्र, 'जिला' विद्यालयेऽवसौ ।। २१

शिक्षकत्वं समाश्रित्य प्रधानाचार्यतां गतः ।
स्वामित्वोन्मूलनो च्छिष्टां पैतृकीं भुवमैक्षत ।। २२युग्मम्

तुर्योयोध्याप्रसादस्तु, स स्नेहं पितृनोदितः ।
प्राप्य माध्यमिकीं शिक्षां,मध्यैष्ट सुर भारतीम् ।। २३

पूर्वं 'सोरों' स्थ संस्थाया, मास्थितायामुपालयम् ।
अशिक्षतावधानेन, पटिष्ठः सहपाठिनाम् ।। २४

सहयोग मुपागम्य, सतीर्थ्यैं स्तीर्थ वासिभिः ।
मन्दै दुर्व्यसनासक्तैः, स्वाच्छन्द्यमन्ववर्तत ।। २५

पित्रोः प्रेष्ठतया धृष्ट, आचरन् बाल चापलीम् ।
इत्वरः समभूत् कामं, तथाप्यध्ययने पटुः ।। २६

परि भ्रमन् यथा ज्ञानं, विद्यापीठान्यनेकशः ।
स 'दिल्ली' मप्यति क्रम्य, 'भिवानीं' नगरं ययौ ।। २७

वसन् विद्यालये तत्र, 'श्याम संस्कृत' पूर्वके ।
विश्वविद्यालयीयायां, मध्यमायामुपाविशत् ।। २८

तत्र सर्वाधिकानङ्काँ, ल्लेभे 'हिसार' मण्डले ।
अध्युष्य च समामेकां, सदनं पुनरासदत् ।। २९

स सान्त्व माप्तै र्विधि वत् प्रबोधितो,
वयोऽनुरूपं नयवर्त्म देशिकैः ।
ततः परित्यज्य स बाल चापलीं,
मनन्यकर्मा ध्ययने मतिं दधे ॥ ३०

विद्यावतां जगति देशिक वर्य कीर्तिं,
नित्यं हिमांशुविशदां प्रसृतां समन्तात् ।
विद्यालयोत्तम ममुं च निशम्य लोकाच्,
शिक्षानिकेतमथ 'कर्णपुरं' प्रपेदे ॥ ३१

श्री बलदेवसहाय,
श्रेष्ठिप्रवरस्य नामतः ख्याते ।
संस्कृत विद्या पीठे,
पठनं तत्राद्दृत स्तेने ॥ ३२

श्रीचन्द्रशेखर इति प्रथिताभिधानो,
वैकुण्ठनाथ इतिनाम शुभं दधानः ।
विद्यावदुल्लसित कर्णपुरे वसन्तौ,
तौ सोदरौ मम गुरू जयतो जगत्याम् ॥ ३३

संख्यावतां सदसि लब्ध यशः प्रशस्ती,
ब्राह्म्या श्रिया च सममेव कृत प्रसादौ ।
प्रज्ञानिधी सकल शास्त्र रहस्य विज्ञौ,
तौ मे गुरू सविनयं शिरसाभिवन्द्यौ ॥ ३४

ताभ्यामधीताखिल शास्त्रसारः,
प्रज्ञान माप्योन्मिषितात्मदृष्टिः ।
उदप्लवे संस्कृत वाङ्मयाब्धिं,
सुखं तदीयेन दयाप्लवेन ॥ ३५

'पीलीभीत' निवासि पण्डितवरः, श्रीमान् दयाशंकरः,
शास्त्री तन्त्रविशारदःसुविदितः, पीयूष पाणिभिषक् ।
पुत्री तस्य सुलक्षणा गुणवती, शीलार्जवा लंकृता,
दिष्ट्या सा मम गेहिनी पद मुपा गच्छत् सरूपान्वय॥३६

स्वकर्तव्याभिज्ञा, गुरुजन सपर्यादृत मनाः,
सहर्षं युञ्जाना, सकल गृह कर्म स्वविरतम् ।
विनीता मुग्धाक्षी, परिमितवचाः सुस्मित मुखी,
मनः प्रीत्यै जाता, मम तु 'शिवदेवी'प्रियतमा ॥३७

अथाङ्गनाङ्काङ्गन मण्डनं महद्,
रुचोल्लसद् रत्न मनर्घ्य मद्वयम् ।
सजीव माक्रीडनकं चिरेप्सितं,
विलोचनासेचनकं सुधाञ्जनम् ॥ ३८

निरन्तरं भावनिबन्धनं मिथो,
बहिश्चरं जीवित मेक मावयोः ।
गुरुप्रसादाद् गिरजा गिरीशयो,
रत्नं मुदेऽभूत् सदपत्यमिन्दिरा' ॥ ३९ युग्मम्

प्राप्याचार्य पदं क्रमेण गणनां मुख्येषु विद्वत्स्वसौ,
'श्री बल्देवसहाय संस्कृत महाविद्यालये'ऽध्यापकः ।
साहित्ये च पदे कृत प्रवचन स्त्वाचार्यकक्षावधि,
सीदन्नर्थकृशः शनैरजहात् तच्श्लाघनीयं पदम् ॥ ४०

अतोऽधि विंशाः शरदः सुधीरो,
निरन्तराः कर्णपुरे व्यतीत्य ।
पुरीं 'बरेली' मनु 'राय' पूर्वां,
प्रीतः प्रवक्तृत्व मथ प्रपेदे ॥ ४१

विद्यालये महति तत्र 'महात्म गान्धि-
नामान्वितोच्चतर माध्यमिके प्रसिद्धे ।
अध्यापयन् स उपविंश समाः प्रवक्ता,
सेवा निवृत्ति मुपलभ्य शमं समैच्छत् ॥४२

निकेत 'माचार्य कुटीर' नामकं,
निजं प्रकल्प्याध्यवसत सह प्रियः ।
शमं समिच्छन्नपि वृत्ति मोहितुं
प्रचक्रमेऽध्यापयितुं स्व सद्मनि ॥४३

अथेन्दिरा नाम सुता मनस्विनी,
हृदा विशेषाध्ययना भिलाषिणी ।
परागता त्वापरिहार्य निश्चया,
चिरं बुभूषु स्तु निजावलम्बिनी ॥४४

तथागतां सुस्थिर निश्चयां सुतां,
विधातु मिच्छन् स निजावलम्बिनीम् ।
प्रशिक्ष्य तां 'लाल ऋषे' स्तु कन्यका,-
शिक्षालये संस्कृत शिक्षिकां व्यधात ॥४५

'बी०एड०' दीक्षा मधि जग्मुषी ममू,-
मासेदुषी संस्कृत एम० ए० प्रथाम् ।
शनैः समालक्ष्य सुतां सुशिक्षितां,
चिराय सोऽति प्रमना धृतिं दधे ॥ ४६

वयस्यन्त्ये समासेव्य, मारण्यक-यति व्रतम् ।
निषेवितुमनाः प्राज्ञः, सद्म त्यक्तुं समैहत ॥ ४७

सुता निर्बन्ध मादृत्य, कुटीरे तदवेक्षया ।
मनसा शम मास्थाय, तस्थौ दुहितृवत्सलः ॥ ४८

कृतिं निजां कामपि सुस्थिरायतिं,
युगानुरूपां जनतोपयोगिनीम् ।
विधातु माप्तै रसकृत् प्रयोजितः,
प्रचक्रमेऽसौ ननु 'नेहरूदयम्' ॥ ४९

विषीदतो व्याधिभिरन्तरात्मनि,
चिकीर्षतः काव्य मिदं निरन्तरम् ।
समाप्ति मागाद् यदनुग्रहादसौ,
सरस्वती मे जननी प्रसीदतु ॥ ५०

यस्याः प्रसादेन समस्त मेतद्,
विभाति विश्वं परितो नवीनम् ।
सा लोक यात्रा व्यवहार हेतुः ।
सरस्वती नृत्यत् वाचि नित्यम् ॥ ५१

श्री विक्रमार्क नृपते र्गणना क्रमेण,
वर्षे गुणात्रि गगनाद्धि मिते प्रवृत्ते ।
मासे मधौ सित दलेऽग्नितिथौ बुधे च,
काव्यं समाप्ति मगमत् शिवयोः प्रसादात्॥५२





इति नेहरूदये काव्ये प्रणेतृ परिचयो नाम परिशिष्टःसर्गः।

